# भगवन्तभास्कर

जिसमें

अनेकप्रकार का निर्णय निरूपण किया
गया है व उसका प्रमाण भी हर
एक में शामिल है

जिसको

नीलकण्ठ भट्ट ने अतीव परिश्रम से बनाया और
ज़िला सीतापूर तहसील बिसवां मौज़ा पकरिया
निवासी पण्डित श्यामलाल मिश्रजी
के द्वारा प्रकाशित हुई

प्रथमबार

लखनऊ

मुन्शी नवलकिशोर (सी, आई, ई) के छापेख़ाने में छपी
मार्च सन् १८९७ ई०

इस मतबेमें जितनेप्रकारकी ज्योतिषकी पुस्तकें छपीहैं उनमें से कुछ नीचे लिखी जाती हैं॥

## जातकालंकार सटीक

पण्डित रामरत्नअवस्थीकृत भाषा टीका है इसमें जन्मपत्र का सम्पूर्ण फल श्लोकों में वर्णित है ॥

## लग्नचन्द्रिकाभाषाटीकासहित

मूलश्लोक काशिनाथजी और टीका भाषा ज़िलअ उन्नाम मौज़े तारगांवनिवासी पण्डित रामविहारीसुकुलकृत इसमें सुगमरीति से जन्म की तिथि, वार, नक्षत्र, योग और करण का फल, संवत्सर उत्तरायण और दक्षिणायन का फल, ऋतु और मासफल, संपूर्ण ग्रहों का फल, भावाध्याय, एकग्रह द्विग्रह आदि योग, राजयोग, अरिष्टाध्याय, चन्द्रनिर्य्याण और विंशोत्तरी आदि दशा जिनका कि जन्मपत्रमें बहुधा काम रहता है संपूर्ण वस्तु सुगम और प्रामाणिक रीति से रचित है जन्मपत्रका फल विचारने के लिये यह पुस्तक बहुतही उत्तम है कोई बात जन्मपत्रकी इससे छूटी नहीं है जिससे थोड़ा पढ़ा हुआ भी जन्मपत्रका संपूर्ण फल कहसक्ता है यह पुस्तक अवश्य देखने योग्य है ॥

## मुहूर्त्तदीपक भाषाटीकासहित

पण्डित जगन्नाथजी कृत इसमें बालकों के समझने के लिये बहुत सुगम विवाहादि के शुभाशुभ मुहूर्त्त लिखे हैं ॥

# भूमिका

प्रकट हो कि आज कल्ह प्रचलित धर्मशास्त्र के ग्रन्थ निर्णय सिन्ध्वादिक, जिनमें कि वार्षिक कृत्य तथा अन्य विषय भी विस्तार पूर्वक वर्णित हैं बहुत बड़ा होने के कारण अधिक मूल्य होने से सब लोगों को सुलभ नहीं है दैवयोग से यह ग्रन्थ श्रीयुत पण्डित श्यामलालजी के द्वारा प्राप्तहुआ जो कि आज तक किसी मुद्रण यन्त्रालय में नहीं छपा है चमत्कार यह है कि ग्रन्थके स्वल्प होनेपर भी वर्ष के यथावत् वृतादिक तथा वैदिक यागादिक हैं इसमें उन सबका सविस्तर वर्णन है ग्रन्थका सम्पूर्ण विषय सूचीपत्र द्वारा सब महाशयों को विदित होजायगा. यह ग्रन्थ यन्त्रालयाध्यक्ष की आज्ञानुसार बहुत परिश्रम से शुद्धकरिकै छापागया है, वस्तुतः यह पुस्तक सब प्रकार उत्तम है। आशा है कि ऐसे अपूर्व ग्रन्थके अवलोकन से लोग अवश्य लाभ उठावैंगे ॥

# भगवन्तभास्कर का सूचीपत्र ॥

इति




# भगवन्तभास्कर ॥

योलीलयासन्तनुतेऽत्रविश्वं तत्पालयत्यात्मनिविश्व
रूपः ॥ लयंनयत्याशुचपूर्णरूपः शिवंतनोत्वाशुरवि
र्मनासौ १ श्रुतीःस्मृतीर्वीद्यपुराणजातं तत्तन्निबन्धा
नपिसन्निबन्धान् ॥ श्रीशङ्करस्यात्मजनीलकण्ठस्ति
थ्यादिकृत्यंविवृणोतिसर्व्वम् २ प्रतारकैराहतमत्रकि
ञ्चिन्मयातुनिर्म्मूलतयातदुज्झितम् ॥ ऊनोक्तितातेन
हितेनकाचिद्दपुष्पहीनापचितिर्न्नहीयते ३ समूलनि
र्म्मूलमपिव्यवस्थांचिरादनापद्विषयस्यकैरपि ॥ नानौ
षधैस्तद्वणिगापणस्थैर्भिषग्वरानुक्तगुणैःसमन्ता ४ सं
स्कारचारकलाःश्राद्धंनीतिर्व्विवाददानेच ॥ अत्रोत्सर्गः
प्रतिष्ठाप्रायश्चित्तंविशुद्धिशान्तीच ५ (तिथिर्द्वेधापूर्णा
खण्डाच ॥ आद्यास्कान्दे) प्रतिपत्प्रभृतयःसर्व्वाउद
यादुदयाद्रवेः ॥ सम्पूर्णाइतिविख्याताहरिवासरवर्जि
ताः ( हरिवासरएकादशी ) तत्रवेधान्तरंवक्ष्यते ॥

(तद्भिन्नाखण्डातस्यावेधमाहपैठीनसिः) पत्तद्वयेऽपि तिथयस्तिथिंपूर्वान्तथोत्तराम् ॥ त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयंविधिःस्मृतेति (अथपूर्व्वयातिथ्योदयो त्तरमुत्तरयाचोदयात्पूर्व्वात्रिमुहूर्त्तयोवेधोविधीयत इति केचित्) निर्नेतॄणांतुसर्वेषांदिनमध्यएवपूर्वोत्तरातिथ्यो स्त्रिमुहूर्त्तयोःप्रवेशोऽभिमतः ॥ वक्ष्यमाणशिवरहस्य विष्णुधर्म्मोत्तरादिवाक्यात् ॥ सर्व्वथाहोरात्रद्वयगामि नीतिथिःसंदिग्धत्वान्निर्णेया ॥ साचकर्म्माङ्गतयाविहि तैवनिषिद्धा (तथाचवृद्धगार्ग्यः) विधिःपूज्यस्तिथौ तत्रनिषेधःकालमात्रक इति (यत्तुदक्षः) त्रिमुहूर्त्ता नकर्त्तव्यायातिथिःक्षयगामिनी ॥ द्विमुहूर्त्तापिकर्त्तव्या यातिथिर्वृद्धिगामिनीति ॥ अत्रापिशब्दस्यपूर्वार्द्धेन्व यान्नात्रिमुहूर्त्तत्यागेद्विमुहूर्त्तग्रहणेचतात्पर्य्यम् (अतए वशिवरहस्ये) यांप्राप्यास्तमुपैत्यर्कःसाचेत्स्यात्त्रिमुहू र्त्तगा ॥ धर्म्मकृत्येषुसर्व्वेषुसम्पूर्णांतांविदुर्बुधा इति ॥ (तेनविष्णुधर्म्मोत्तरे) उदितेदैवतंभानौपित्र्यंचास्तमि तेरवौ ॥ द्विमुहूर्तंत्रिरह्नश्चसातिथिर्हव्यकव्ययोरिति ॥ द्विमुहूर्त्तग्राह्यतोक्तिरनुकल्पएव ॥ उदितेभानौद्विमुहूर्त्त दैवतम् ॥ अस्तमितेअस्तगंतुमारब्धेऽह्नस्त्रिमुहूर्त्तेपित्र्य मित्यर्थः ॥ अह्नइत्यन्वयादस्तमितइति ॥ आदिक र्म्मणिक्तः ॥ व्रतोपवासनियमेघटिकैकापियाभवेत् ॥ उदयेसातिथिस्तत्राविपरीतातुपैतृकइत्यादीनिपद्माादिव चनानितुवैश्वानराधिकरणन्यायेन त्रिमुहूर्त्तवेधमेवस्तु वन्तीतिमाधवादयः ॥ एकादशीपराणीतितुयुक्तम् ॥

कासुतिथिषुनिषेधप्रयोजकोवेधः ( स्कान्दे ) नागो
द्वादशनाडीभिर्दिक्पञ्चदशाभिस्तथा ॥ भूतोष्टादशना
डीभिर्दूषयत्युत्तरांतिथिमिति ॥ नागःपञ्चमीदिक्दश
मीभूतश्चतुर्दशी ( इतिवेधः ) तत्रविहितातिथिर्वि
भक्ताविभागेनषोढा ॥ पूर्वेद्युरेवकर्म्मकालगाऽपरेद्युरे
वोभयोरुभयोरंशेनतत्रापिसाम्येनवैषम्येनवेति ॥ त
त्रान्यतरदिनेकर्मकालगाचेत्सैवग्राह्या ॥ योयस्यविहि
तःकालस्तत्कालव्यापिनीतिथिः ॥ तयाकर्म्माणिकुर्वी
तह्रासवृद्धीनकारणमितिगार्ग्योक्तेः ॥ अत्रएवाहोरा
त्रसाध्येउपवासादौयाहोरात्रगासैवग्राह्यातदभावेऽन्य
तरगा ॥ दिवारात्रिव्रतंयच्चएकमेवतिथौगतम् ॥ त
स्यामुभययोगिन्यामाचरेत्तद्व्रतंब्रवीतीतिस्मृतेश्च ॥ वै
षम्येणकर्म्मकालस्पर्शोऽधिकाग्राह्या ॥ उभयोर्नोभयोः
साम्येनैकदेशउभयोरित्येतेषुनिर्णयोनिगमे॥ युग्माग्नि
युगभूतानांषण्मुन्योर्वसुरन्ध्रयोः ॥ रुद्रेणद्वाद शीयुक्ता
चतुर्द्दश्याचपूर्णिमा ॥ प्रतिपद्यप्यमावास्या।तिथ्योर्युग्मं
महाफलम् ॥ एतद्व्यस्तंमहादोषंहन्तिपुण्यंपुराकृत
मिति ॥ युग्मंद्वितीया॥ अग्निस्तृतीया ॥ युगंचतुर्थी ॥
भूतःपञ्चमी ॥ षट्षष्ठी ॥ मुनिःसप्तमी ॥ वसुरष्टमी ॥
रन्ध्रोनवमी ॥ रुद्रएकादशी ॥ तिथ्योर्युग्मंद्वितीयातृ
तीयायुतातृतीयाचतथ्युतेति ॥ एवंचतुर्थीपंचम्यादीनां
युग्मानि ( यत्तु ) षष्ठ्यष्टम्यप्यमावास्याशुक्लपक्षेचतु
र्द्दशी ॥ एताःपरयुताःपुण्याःपराःपूर्वेणसंयुता ॥ इति
युग्मवाक्यंतदप्येतत्संवाद्येव ( यत्तु ) प्रतिपत्सद्वितीी

यास्याद्द्वितीयाप्रतिपद्युतोति ( यच्च ) चतुर्थीसंयु
तायाचसातृतीयाफलप्रदा ॥ चतुर्थीचतृतीयायांमहा
पुण्यफलप्रदेति ( तदेतद्विरुद्धम् ) अनयोश्चपक्षभेदेन
व्यवस्थोक्ताविष्णुधर्म्मोत्तरे॥ शुक्लपक्षेतिथिर्ग्राह्यायस्या
मभ्युदितोरविः ॥ कृष्णपक्षेतिथिर्ग्राह्यायस्यामस्तमि
तोरविरिति ॥ कर्मकालव्याप्तौतुउपक्रमगासमयः ॥
योयस्यविहितःकालःकर्म्मणस्तदुपक्रमे॥ विद्यमानाभ
वेदंगंनोज्झितोपक्रमेणत्वितिवचनात् ॥ अयञ्चयुग्म
वाक्यकृतोनिर्णयोदैवेएवकर्म्मणि ॥ पित्र्येतुपूर्वोक्तप
क्षेषु ॥ खर्वोदर्पस्तथाहिंसात्रिविधंतिथिलक्षणम् ॥
खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्व्वकालिकीतिउशनोवच
सांनिर्णयः॥ खर्व्वःसाम्यम्॥दर्प्पोवृद्धिः॥ हिंसाक्षयः॥
एतेचखर्वादयः॥ क्वचित्पूर्व्वतिथ्यपेक्षयाग्राह्यतिथेरेव॥
क्वचिद्ग्राह्यमपेक्ष्योत्तरतिथेरितितत्रवक्ष्यामः (तथाच
निगमे) द्वितीयादिकयुग्मानां पूज्यतानियमादिषु ॥
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदनेति ॥ अत्रा
द्यमादिपदंतिथ्यंतराणामुपादानार्थं॥ द्वितीयंसकलदै
वकर्मणाम् ॥ तृतीयंपार्वणस्य ॥ चतुर्थंवृद्धिनिमित्त
कश्राद्धलक्षकम्॥ परादौयेषामित्यतद्गुणसंविज्ञानबहु
व्रीहिणासर्वदेवश्राद्धानाम् ॥ मुख्यवृद्धिश्राद्धस्यातिथ्य
प्रयुक्तत्वेनतन्निर्णयानुपयोगात् ॥ वृद्धिपदंस्वनिमित्त
कश्राद्धलक्षकम् ॥ पञ्चमंसाम्यह्रासवृद्ध्यादिचोदना
खर्वदर्पादिवाक्यमित्यर्थः ( यत्तुदेवलः ) यांतिथिंस
मनुप्राप्यउदयंयातिभास्करः ॥ सातिथिःसकलाज्ञेया

स्नानदानजपादिष्विति (यच्चस्कान्दे) यांतिथिंसम नुप्राप्ययात्यस्तंपद्मिनीपतिः ॥ सातिथिःसकलाज्ञेया दानाध्ययनादिकर्मस्विति ॥ तत्पूर्वोत्तरग्राह्यत्वसाध कानांयुग्मखर्वशुक्लकृष्णादिवचसांउपोद्बलकम् (ए तदपवादःस्कान्दे) मन्वादौचयुगादौच ग्रहणेचन्द्र सूर्य्ययोः॥व्यतीपातेवैधृतौच तत्कालव्यापिनीक्रिया॥ अभ्यङ्गेचोदधिस्नानेदन्तधावनमैथुने ॥ जातेचमरणे चैवतत्कालव्यापिनीतिथिरिति ॥ विरुद्धवचोऽयवस्था अह्नःसामान्यतोविभागमाह (व्यासः) मुहूर्त्तत्रितयं प्रातस्तावानेवतुसङ्गमः ॥ मध्याह्नस्त्रिमुहूर्त्तःस्यादपरा ह्णोपितादृशः ॥ सायाह्नस्त्रिमुहूर्त्तःस्यात्सर्वकर्मबहिष्कृ तइति ॥ पूर्वाह्णमध्याह्नापराह्णइतित्रेधाविभागस्यक्वचि त् ॥ पूर्वाह्णापराह्णइतिद्वेधाविभागस्यचपर्वनिर्णयादौउ पयोगेवक्ष्यते (अथैकभुक्तंदेवलः) दिनार्द्धसमयेऽती तेभुज्यतेनियमेनयत् ॥ एकभुक्तमितिप्रोक्तंन्यूनंग्रास त्रयेणतु ॥ दिनार्द्धोत्तरंसामान्यतोप्युक्तः ॥ कालोम ध्याह्नान्तावधिरेवमध्याह्नव्यापिनीग्राह्या एकभुक्तेव्रते तिथिरितिबौद्धायनोक्तः ॥ अत्रपूर्वोक्तषट्पक्षेषूत्तरदिन एवकर्मकालव्याप्तावधिकस्पर्शेचोत्तरान्यथापूर्वैवेतिमा धवः (अथनक्तंव्यासः) त्रिमुहूर्त्तंप्रदोषःस्याद्भा नावस्तङ्गतेसति ॥ नक्तन्तत्रप्रकुर्वीतइतिशास्त्रस्यनि श्चयः ॥ यत्तुसायंसाध्यात्रिघटिकाह्यस्तादुपरिभास्वत इतिस्कान्दोक्तसन्ध्यायाम् (मार्कण्डेयेन) चत्वारीमा निकर्माणिसन्ध्यायांपरिवर्ज्जयेत् ॥ आहारंमैथुनंनिद्रां

स्वाध्यायश्चचतुर्थकमिति ॥ भोजनंनिषिद्धन्तद्रागप्रा
प्तंनवैधंनक्तंभोजनंविधिस्पृष्टेनिषेधानवकाशात् ॥ एते
नपर्वादिरात्रिभोजननिषेधोऽप्यत्रप्रयुक्तः ॥ प्रदोषव्या
प्त्यभावे (स्कान्दे) प्रदोषव्यापिनीनस्याद्दिवानक्तंविधी
यते ॥ आत्मनोद्विगुणाच्छायामन्दीभवतिभास्करे ॥ त
न्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनम् ॥ एवंज्ञात्वाततोवि
द्वान्सायाह्नेतुभुजिक्रियाम् ॥ कुर्यान्नक्तव्रतीनक्तंफलंभव
तिनिश्चितमिति (सौरनक्ते) त्रिमुहूर्त्तस्पृगेवाह्निनिशिचै
तावतीतिथिः ॥ तस्यांसौरंभवेन्नक्तमहन्येवतुभोजनम् ॥
(स्मृत्यन्तरेविशेषः) यतिश्चविधवाचैवकुर्य्यात्तत्सदिवा
करम् ॥ सदिवाकरन्तुतत्प्रोक्तमन्तिकेघटिकाद्वयइति
(इतिनक्तनिर्णयः ॥ अथापाचितम् ) तच्चपाचितभोज
निषेधरूपमपाचितम्भोज्यइतिव्रतरूपंवा ( तस्यफलमु
क्तंमाधवीयेस्मृत्यन्तरे ) अपाचिताशीमितभुक्परांसि
द्धिमवाप्नुयादिति॥ अत्रविशेषवचनाभावादुपवासवन्नि
र्णयइतिकेचित् (तन्न) एकभुक्तापाचितयोर्विंशद्घाटि
कावधिस्तुया ॥ सातिथिःसर्वदाज्ञेयानक्तेसायाह्नसंग
तेतिशार्ङ्गधरीयेनारदोक्तेः ( अथप्रसंगाद्व्रतविषयेकि
ञ्चिदुच्यते ॥ सत्यव्रतः) उदयस्थातिथिर्याहिनभवेद्दिन
मध्यभाक् ॥ साखण्डानव्रतानांस्यादारंभश्चसमापन
मिति (ब्रह्मयामले ) दिनभद्रायदारात्रौरात्रिभद्राय
दादिवा ॥ नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः ( व्र
तखण्डेअग्निपुराणे) व्रीहिःषष्टिकमुद्गाश्चकलायाःसलि
लंपयः ॥ श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः ॥

कूष्माण्डालाबुवार्त्ताकपालक्यज्योत्स्निकास्त्यजेत् ॥ चतुर्भैद्यंसक्तुकणाशाकंदधिघृतंमधु ॥ श्यामाकाःशालिनीवारायावकंमूलतण्डुलम् ॥ हविष्यव्रतनक्तादावग्निकार्यादिकेहितम् ॥ मधुमांसंविहायान्यद्व्रतेचहितमीरितम् ॥ ज्योत्स्निकाकोशातकी ॥ हितम् । मधुमद्यम् । छन्दोगपरिशिष्टे ( कात्यायनः ) हविष्येषुयवामुख्यास्तदनुव्रीहयःस्मृताः ॥ माषकोद्रवगौरादीन्सर्वाभावेपिवर्ज्जयेत् ( भविष्योत्तरे ) हैमन्तिकंसितास्विन्नंधान्यंमुद्गाययवास्तिलाः ॥ कलापकंगुनीवारावास्तूकंहिलमोचिका ॥ षष्टिकाकालशाकंचमूलकंकेमुकेतरम् ॥ कन्दःसैंधवसामुद्रेलवणेमधुसर्पिषी ॥ पयोनुद्धृतसारंचपनसाम्रहरीतकी ॥ पिप्पलीजीरकंचैवनागरंगाह्वतिंतिणी ॥ कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ॥ अतैलपक्वंमुनयोहविष्याणिप्रचक्षते ॥ सर्पिश्चात्रगव्यम् ॥ अतैलपक्वमित्येतत्कथितहविष्याणामेवविशेषणम् ( हारीतः ) पतितपाखण्डिनास्तिकादिसंभाषणानृताश्लीलादिकमुपवासादिषुवर्ज्जनीयमिति॥ ( कौर्मे ) बहिर्ग्रामांत्यजान्सूतिंपतितंचरजस्वलाम् ॥ नस्पृशेन्नाभिभाषेतनेक्षेतव्रतवासरे ( व्रताधिकारेसुमन्तुः) विहितस्याननुष्ठानमिन्द्रियानामनिग्रहः ॥ निषिद्धसेवनंनित्यंवर्जनीयंप्रयत्नत इति ( विष्णुधर्मोत्तरे ) असकृज्जलपानंचादिवास्वापंचमैथुनम् ॥ ताम्बूलचर्वणंमांसंवर्ज्जयेद्व्रतवासरे इति ॥ मांसनिषेधःपारणादिनेपारणांतंव्रतंज्ञेयामित्युक्तेः ॥ नतुप्रधानदिनेप्रश

क्त्यभावात् ॥ वर्ज्जयेत्पारणेमांसंव्रताहेप्यौषधंसदेत्यु
क्तश्च ॥ औषधरूपमपिमांसंव्रताहेवर्ज्जयेदित्यर्थः ॥
( देवलः ) असकृज्जलपानाच्चसकृत्ताम्बूलचर्वणात् ॥
उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् ॥ आशक्तौतु
सएव॥अत्ययेचाम्बुपानेननोपवासःप्रणश्यतीति॥अत्य
येप्राणात्यये ( वृद्धवशिष्ठः ) उपवासेतथाश्राद्धेनकुर्या
द्दन्तधावनम् ॥ दन्तानांकाष्ठसंयोगोहन्तिसप्तकुलानि
चेति (पैठीनसिः) अलाभेवानिषेधेवाकाष्ठानांदन्तधा
वने ॥ पर्णादिनाविशुद्धेतजिह्वोल्लेखेसदैवच ( व्यासः )
अलाभेदन्तकाष्ठानांनिषिद्धायांतथातिथौ ॥ अपांद्वाद
शगण्डूषैर्विदध्याद्दन्तधावनम्( विष्णुरहस्ये) नृत्यालो
कनगन्धादिस्वादनंपरिकीर्त्तनम् ॥ अन्नस्यवर्ज्जयेत्सर्वं
ग्रासानांचाभिकांक्षणम् ॥ गात्राभ्यंगंशिरोभ्यंगंताम्बू
लंचानुलेपनम् ॥ व्रतस्थोवर्ज्जयेत्सर्वंयच्चान्यद्बलनाकृ
तम्(मैथुनंचाष्टांगं॥तथाचस्मृतिः) स्मरणंकीर्त्तनंकेलिः
प्रेक्षणंगुह्यभाषणम् ॥ सङ्कल्पोध्यवसायश्चक्रियानिर्वृ
त्तिरेवच॥एतन्मैथुनमष्टांगंप्रवदन्तिमनीषिणः (देवलः)
स्त्रीणान्तुप्रेक्षणात्स्पर्शात्ताभिःसङ्कथनादपि ॥ विघ्नते
ब्रह्मचर्यंहिनदाष्वृतुसङ्गमादिति ॥ स्वदारेषुसङ्गमादित्य
पिक्वचित्पाठः ( विष्णुधर्मोत्तरे ) तज्जप्यजपनध्यानत
त्कथाश्रवणादिकम् ॥ तदर्चनञ्चतन्नामकीर्त्तनश्रवणा
दयः ॥ उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः ॥ तच्छ
ब्देनोपास्यदेवताव्रतदेवताच ( देवलः ) ब्रह्मचर्यमहिं
साचसत्यमामिषवर्ज्जनम् ॥ व्रतेष्वेतानिचत्वारिकर्त्त

व्यानीहसूरिभिः (आमिषंमांसम्) आमिषंदातिपानी
यज्ञोवर्ज्यंचीरमामिषम्॥ मसूरमामिषंसस्येफलेजम्बी
रमामिषम्॥ आमिषंशुक्तिकाचूर्णमारनालंतथामिषमि
तिस्मृत्यन्तरोक्तंवा (पाद्मे) अष्टौतान्यव्रतघ्नानिआ
पोमूलंफलम्पयः॥ हविर्ब्राह्मणकाम्यञ्चगुरोर्वचनमौष
धम्॥ पयःपानादीनामव्रतघ्नत्वंस्त्रीबलाद्यत्यन्तपीडि
तविषयम् (हेमाद्रौपाद्मे) गर्भिणीसूतिकादिश्चकुमा
रीवाथरोगिणी॥ यदाशुद्धातदान्येनकारयेत्प्रयतास्व
यम् (मदनरत्नेछागलेयः) पूर्वंव्रतंगृहीत्वापोनचरेत्का
ममोहितः॥जीवन्भवतिचाण्डालोमृतश्चश्वाचाभिजा
यते (गरुडपुराणे) क्रोधात्प्रमादाल्लोभाद्वाव्रतभङ्गो
भवेद्यदि॥ दिनत्रयंनभुञ्जीतमुण्डनंशिरसोथवेति॥
प्रायश्चित्तान्तरमतिक्रान्तानुष्ठानङ्कार्यम्॥प्रायश्चित्त
मिदंकृत्वापुनरेवव्रतीभवेदितिवायुपुराणोक्तेः (अथप्र
तिपदमारभ्यक्रमेण)सर्वतिथीनांनिर्णयस्तत्कृत्यञ्चोच्य
ते (तत्रादौप्रतिपन्निर्णीयते) तत्रप्रतिपदपराह्णव्या
पिनीशुक्लपक्षेपूर्वाग्राह्या॥ प्रतिपदप्यमावास्येतियुग्म
वाक्यात् (मदनरत्नेस्कन्दपुराणेपि) प्रतिपत्संमुखीका
र्यायाभवेदपराह्णिकीति (दीपिकायामपि) शुक्लास्या
त्प्रतिपत्तिथिःप्रथमतश्चेत्सापराह्णेभवेदिति॥ तदभा
वेतूक्तंमाधवेन॥ तदभावेतुसायाह्नव्यापिनीपरिगृह्यत
इति॥ कृष्णपक्षेपराग्राह्यातदुक्तंदीपिकायाम्॥ कृष्णा
तूत्तरतोवलेति (अथचैत्रप्रतिपत्कृत्यम्भविष्योत्तरे)
चैत्रेमासिमहावाहोपुण्याप्रतिपदापरम्॥ यस्तस्यांश्व

पचंस्पृष्ट्वास्नानंकुर्य्यान्नरोत्तमः ॥ नतस्यदुरितङ्किञ्चिन्नाधयोव्याधयोनृप ( तथा ) कृत्वाचावश्यकार्याणिसन्तर्प्यपितृदेवताः ॥ वन्दयेद्धोलिकाधूलिंसर्वदुष्टोपशान्तये (मंत्रः)वन्दितासिसुरेन्द्रेणवन्दिताशंकरेणच ॥ अतस्त्वम्पाहिनोदेविभूतेभूतिप्रदाभवेति (पुराणसमुच्चये) वृत्तेतुषारसमयेसितपञ्चदश्यां प्रातर्वसन्तसमयेसमुपस्थितेच ॥ सम्प्राप्यचूतकुसुमंसहचन्दनेनसत्यंहिपार्थपुरुषोऽथसमासुखीस्यात् ॥ पञ्चदश्यामतीतायांप्रातरित्यर्थः ॥ येपिबन्तिवसन्ताद्येचूतपुष्पंसचन्दनम् ॥ सत्यंहृत्स्वस्यकामस्यपूजनंक्रियतेनरैरितिभविष्योत्तरात् ॥ वसन्ताद्येचैत्रप्रतिपदि ( मंत्रः ) दूतमग्र्यंवसन्तस्यमाकन्दकुसुमन्तव ॥ सचन्दनम्पिबाम्यद्यसर्वकामार्थसिद्धये ( भविष्योत्तरे ) ततःप्रातर्द्वितीयायांपुत्रमित्रादिसंयुतः ॥ नृपतिर्वितते देशेवितानवरशोभिते ॥ उपविश्यासनेरम्येपौरजानपदैःसह ॥ सिन्दूरकुंकुमक्षौद्रपटवासैःसचन्दनैः ॥ विकीर्य्यलोकाँस्ताम्बूलैःसामान्यश्चपृथक्पृथक् ॥ नृत्यगीतविनोदैश्चकुर्य्यात्काममहोत्सवम् ॥ एवंकुर्वन्नवाप्नोतियावत्संवत्सरंसुखमिति ॥ इदम्पूर्वविद्धायामेव ॥ वत्सरादौवसन्तादौबलिराज्येतथैवच ॥ पूर्वविद्धैवकर्त्तव्याप्रतिपत्सर्वदाबुधैरिति (वृद्धवशिष्ठवाक्यात् ) चैत्रशुक्लप्रतिपदपिवत्सरारम्भेउदयव्यापिनीग्राह्या ( तदुक्तंमाधवीयेब्राह्मे ) चैत्रेमासिजगद्ब्रह्माससर्ज्जप्रथमेहनि॥ शुक्लपक्षेसमग्रन्तुसदासूर्योदयेसतीति ॥ दिनद्वयेउदयव्याप्तावव्याप्तौवापूर्वैव ॥

पूर्वोक्तवृद्धवशिष्ठवाक्यात् ॥ तत्रतैलाभ्यङ्गउक्तस्ते नैव ॥ वत्सरादौवसन्तादौबलिराज्येतथैवच ॥ तैलाभ्यङ्गमकुर्वाणोनरकम्प्रतिपद्यतइति ( अत्रशकादिश्रवणमुक्तंज्योतिःशास्त्रे ) शकवत्सरभूपमंत्रिणांरसधान्येश्वरमेघपतीनाम् ॥ श्रवणात्पठनाच्चैव नृणांशुभताचात्यशुभंसहाश्रियेति ॥ चैत्रस्यमलमासत्वेतैलाभ्यङ्गः शकश्रवणादिशुद्धएवकार्यः ॥ यद्यपिवत्सरवसन्तयोः प्रवृत्तिर्जाता ॥ तथापि ॥ षष्ठयादिदिवसैर्मासःकथितो वादरायणैः ॥ पूर्वमर्द्धंपरित्यज्यकर्त्तव्याचोत्तरेक्रियेति वचनेपूर्वमासकृत्यस्योत्तरमासेकर्त्तव्यत्वाभिधानात् ॥ नवरात्ररामनवम्यादिवत् ( तथाचविशेषोभविष्ये ) अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे ॥ पुण्येह्निविप्रकथितेप्रपादानंसमारभेत् ॥ ततश्चोत्सृज्यतोविद्वान्मंत्रेणानेनमानवः ॥ प्रपेयंसर्वसामान्याद्भूतेभ्यःप्रतिपादिता॥अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः॥अनिवार्यंततोदेयं जलंमासचतुष्टयम् ॥ प्रपांदातुमशक्तेनविशेषार्द्धमपीप्सुना ॥ प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ॥ ब्राह्मणस्यगृहेदेयं शीतामलजलंशुचिः ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः॥अस्यप्रदानात्सकलाभमसन्तु मनोरथाः॥अनेनविधिनायस्तुधर्मकुम्भंप्रयच्छति॥प्रपादानफलंसोऽपिप्राप्नोतीहनसंशयइति (ज्येष्ठप्रतिपदिदशहरारंभःकाशीखण्डे ) ज्येष्ठेमासिसितेपक्षेप्राप्यंप्रतिपदंतिथिम्॥दशाश्वमेधिकेस्नात्वामुच्यतेसर्वपातकैः॥ एवंसर्वासुतिथिषुक्रमस्नायीनरोत्तमः॥ आशुक्लपक्षदश

मींप्रतिजन्माद्यमुत्सृजेदिति (आश्विनशुक्लपक्षप्रतिप
दिनवरात्रारम्भः॥ तदुक्तंहेमाद्रौधौम्येन) आश्विनेमा
सिशुक्लेतुकर्त्तव्यन्नवरात्रकम्॥ प्रतिपदादिक्रमेणैवयाव
च्चनवमीभवेत्॥ अत्रपूर्वाह्णव्यापिनीग्राह्या॥ आश्विन
स्यसितेपक्षेनवरात्रमुपोषितः॥ सुस्नातस्तिलतैलेनपूर्वा
ह्णेपूजयेच्छिवामिति॥ देवीपुराणेतत्कर्मकालोक्तेःकर्म
णोयस्ययःकालस्तत्कालव्यापिनी तिथिरित्यनेनकर्मका
लव्यापिन्यामेवकर्मकर्त्तव्यत्वोक्तेः॥ नवरात्रोपवासानु
रोधेननिर्णयः ॥ तस्यनवरात्रमुपोषितःपूजयेदित्यादि
देवीपुराणादौ॥नखानिनिकृंततिनश्मश्रूणीत्यादिवत्फ
लसंस्कारत्वेनपूजाङ्गत्वावगमात् ॥ अतःप्रधानभूतपू
जाकालपूर्वाह्णव्यापित्वेनैवनिर्णयः ॥ पूजायास्तुप्रा
धान्यंफलसम्बन्धात् (सचस्कान्दे) आश्विनेमासि
मेघान्तेमहिषासुरमर्द्दिनीम् ॥ देवींसम्पूजयित्वायेत्व
र्द्धरात्रेष्टमीषुच ॥ क्रीडन्तिविविधैर्भोगैर्देवलोकेसुदुर्ल
भे ॥ नाधयोव्याधयस्तेषांनचशत्रुभयम्भवेदिति (य
त्तुदेवीपुराणे) शरत्कालेमहापूजाक्रियतेयाचवार्षिकी॥
साकार्योदयगामिन्यांनातिथेस्तत्रयुग्मतेति ॥ तत्रोदय
गामित्वमपिप्रायः पूर्वाह्णव्यापित्वएवभवति (युग्मता)
युग्मवाक्यानुरोधेननिर्णयइत्यर्थः॥ वार्षिकीत्यनेनसंव
त्सरस्यादावेवशुक्लप्रातिपद्युपक्रम्य नवम्यंतापूजाविधी
यते ॥ ततश्चशरद्वसन्तयोस्तुल्यएवदुर्गोत्सवःकार्यः॥
(यानितु) योमांपूजयतेनित्यंद्वितीयादिगुणान्विताम्॥
प्रतिपच्छारदेज्ञात्वासोऽश्नुतेसुखमव्ययम् ॥ यदिकुर्या

दमायुक्तम्प्रतिपत्स्थापनंमम ॥ तस्यशापशतन्दत्त्वा भस्मशेषङ्करोम्यहम् ॥ आग्रहात्कुरुतेयस्तुकलशस्था पनंमम ॥ तस्यसम्पद्विनाशःस्याज्ज्येष्ठःपुत्रोविनश्य ति (तथा) नदर्शकलयायुक्ता प्रतिपच्चण्डिकार्च्च ने ॥ उदयेद्विमुहूर्त्तापिग्राह्यासोदयगामिनीति ॥ या चाश्वयुजिमासेतु प्रतिपद्भद्रयान्विता ॥ शुद्धंममार्च्च नन्तस्यां शतयज्ञफलप्रदमित्यमायोगनिषेधकानि ॥ यानिच ॥ द्वितीयाशेषसंयुक्ताप्रतिपच्चण्डिकार्चने ॥ मोहादथोपदेशाद्वाकृतंपुत्रविनाशकम् ॥ आरम्भेनव रात्रस्यद्वितीयात्रुटिसंयुता ॥ नकेवलंतिथिंहन्तिवे धात्सापुत्रसम्पदमित्यादीनि द्वितीयायोगनिषेधकानि तान्युभयविधान्यपिसर्व्वाणिनिर्मूलानि ॥ समूल त्वेपिपरस्परंसत्प्रतिपक्षत्वादनिर्णायकानि॥ (चन्द्रप्र काशे) प्रातरावाहयेद्देवींप्रातरेवप्रवेशयेत् ॥ प्रातः प्रातश्चसम्पूज्यप्रातरेवविसर्जयेदित्युक्तम् ॥ सतिस म्भवेप्रतिपदआद्यंनाडीषोडशकंत्यक्त्वा कलशंस्थापयेत् आद्याःषोडशनाडीस्तुलब्ध्वायःकुरुतेनरः ॥ कलशस्था पनंतत्रह्यरिष्टंजायतेध्रुवमितिदेवीपुराणवचनात् ॥ क लशस्थापनेवैधृतिचित्रादियोगनिषेधकानिवचनानिनि र्मूलानि ॥ तथाभद्रायुताचेत्प्रतिपत्तुलभ्यतेविरुद्धयोगै रपिसङ्गतासती ॥ सैवापराह्णेविबुधैर्विधेयास्त्रीपुत्ररा ज्यादिविवृद्धिहेतुरिति (कलशस्थापनंतुदिवैवका र्य्यंनरात्रौ ॥ तदुक्तंमात्स्ये) नरात्रौस्थापनंकार्य्यंनचकु म्भाभिषेचनमिति ॥ अत्रत्रिरात्रमप्युक्तंहेमाद्रौधौम्ये

न ॥ त्रिरात्रंचापिकर्त्तव्यंसप्तम्यादियथाक्रममिति ॥
( देवीपुराणे ) कन्यासंस्थेरवौशक्रशुक्लामारभ्यनन्दि
काम् ॥ अपाचीत्वथचैकाशीनक्ताशीवाथवाग्यतः ॥
प्रातःस्नायीजितद्वंद्वस्त्रिकालंशिवपूजकः ॥ जपहोम
समायुक्तःकन्यकांभोजयेन्मुदा ॥ शिवश्चशिवाच
शिवेतयोःपूजकः॥ नन्दाचप्रतिपदेवप्रथमोपस्थितत्वा
त्॥ तत्रप्रतिपदिपूर्वाह्णेतिलतैलेनस्नातोयजमानोगणप
तिंसम्पूज्य देशकालौनिर्द्दिश्यनवमीपर्य्यन्तउपवासाद्य
न्यतमनियमोपेतोदुर्गापूजनममुकफलकामःकरिष्य इ
तिसङ्कल्पयेत्॥ सौवर्णादिप्रतिमापूजार्थंपूज्यामण्डल
कुम्भस्थेतिदेवीपुराणात्॥ मृण्मय्यादिकातुकलशस्य
पश्चादासनेस्थाप्या॥ वेदिकोणेष्वपिचत्वारःकलशाः
स्थाप्याः ॥ चतुरःकलशान्यस्तुदद्याद्देवगृहेनरः ॥
चतुःसमुद्रवलयांसतुभुङ्क्तेवसुन्धरामितिविष्णुधर्मोत्तरा
त् ( प्रतिमाचहेमादिमयी ॥ देवीपुराणे ) हेमरज
तमृद्धातुशैलचित्रार्प्पितापिवा॥ खड्गेशूलेऽर्च्चितादेवी
सर्वकामफलप्रदा ॥ मृण्मयींप्रतिमांकृत्वाविल्वेवाय
स्तुपूजयेत् ॥ आत्मवित्तानुसारेणसलभेन्मौक्तिकंफ
लमिति ( प्रतिमालक्षणंमत्स्यपुराणे ) जटाजूटस
मायुक्तामर्द्धेन्दुकृतलक्षणाम् ॥ लोचनत्रयसंयुक्तांप
द्मेन्दुसदृशाननाम् ॥ अतसीपुष्पवर्णाभांसुप्रतिष्ठांसु
लोचनाम् ॥ नवयौवनसम्पन्नांसर्वाभरणभूषिताम् ॥
सुचारुवदनांतद्वत्पीनोन्नतपयोधराम्॥ त्रिभङ्गस्थानसं
स्थानांमहिषासुरमर्द्दिनीम्॥ त्रिशूलंदक्षिणेदद्यात्खड्गं

चक्रंक्रमादधः ॥ तीक्ष्णबाणंतथाशक्तिंवामतोऽपिनि
बोधयेत् ॥ खेटकंपूर्णचापंचपाशमंकुशमूर्द्धजम् ॥ घ
ण्टांवापरशुंवापिवामतःसंनिवेशयेत् ॥ अधस्तान्महि
षंतद्वदशिरस्कंप्रदर्शयेत् ॥ शिरश्छेदोद्भवन्तद्वद्दानवं
खड्गपाणिनम् ॥ हृदिशूलेननिर्भिन्नंनिर्यदन्त्रविभू
षितम् ॥ रक्तरक्तीकृतांगंचरक्तविस्फारितेक्षणम् ॥ वे
ष्टितंनागपाशेनभ्रुकुटीभीषणाननम्॥ सपाशवामहस्ते
नधृतकेशंचदुर्गया ॥ वमद्रुधिरवक्त्रश्चदेव्याःसिंहंप्रद
र्शयेत् ॥ देव्यास्तुदक्षिणंपादंसमंसिंहोपरिस्थितम् ॥
किंचिदूर्ध्वंतथावाममंगुष्ठंमहिषोपरि ॥ स्तूयमानंच
तद्रूपममरैःसन्निवेशयेदिति ॥ ध्यानमप्येवम् ॥ एहि
दुर्गेमहाभागेरक्षार्थंममसर्वदा ॥ आवाहयाम्यहंदेवि
सर्वकामार्थसिद्धये ॥ अस्यांमूर्त्तौसमागच्छतिष्ठचात्रा
नुकम्पया ॥ रक्षांकुरुसदाभद्रे विश्वेश्वरिनमोस्तुतइ
ति (आवाहनम्) भगवतिदुर्गेइहागच्छइहतिष्ठ इहस
न्निधेहिसंस्थिराभवसुप्रसन्नाभवइत्यपिपठंति ॥ पूजा
दिमंत्रश्चकुर्याद्देव्याश्चमंत्रणेत्याभिधाय ॥ जयन्तीम
ङ्गलाकालीभद्रकालीकपालिनी ॥ दुर्गाक्षमाशिवाधात्री
स्वाहास्वधानमोऽस्तुते ॥ अनेनैवमन्त्रेणजपहोमादि
कारयेदित्युक्तम् ॥ छत्रचामरादिभीराजोपचारैःपूजा॥
तदन्तेप्रणम्यदेवींप्रार्थयेदनेन मन्त्रेण ॥ महिषघ्नि
महामायेचामुण्डेमुण्डमालिनि ॥ द्रव्यमारोग्यविज
यंदेहिदेविनमःसदा ॥ भूतप्रेतपिशाचेभ्योरक्षोभ्यश्च
महेश्वरि ॥ देवेभ्योमानुषेभ्यश्चभयेभ्योरक्षमांसदा ॥

सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबिके
गौरिनारायणिनमोऽस्तुते ॥ रूपंदेहियशोदेहिभाग्यं
भगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामाँश्चदे
हिमे ॥ इति ॥ ततोदुर्गामन्त्रंवैदिकमागमकंवाजपेत् ॥
दुर्गाग्रतोजपेन्मन्त्रमेकचित्तःसमाहितः ॥ इतिदेवीपुरा
णात् (यद्वा) माहात्म्यंभगवत्यास्तुपुराणादिषुकी
र्त्तितम् ॥ पठेच्चश्रृणुयाद्वापिसर्वकामसमृद्धये (तथा)
एकोत्तरादिवृद्ध्यातुनवमींयावदेवतु ॥ चण्डीपाठंज
पेच्चैवजापयेद्वाविधानतः (वाराहीतन्त्रे) सङ्कल्पित
स्तोत्रपाठेसंख्यांकृत्वापठेत्सुधीः ॥ तत्रैव ॥ चण्डीपा
ठफलंदेविश्रृणुष्वगदतोमम ॥ एकावृत्त्यादिपाठानांय
थावत्कथयामिते ॥ सङ्कल्पपूर्वंसंपूज्यन्यस्यांगेषुमनून्
सकृत् ॥ पाठाद्वलिप्रदानाच्चसिद्धिमाप्नोतिमानवः ॥
उपसर्गोपशान्त्यर्थंत्रिरावृत्तंपठेन्नरः ॥ ग्रहोपशान्तौक
र्त्तव्यंपञ्चावृत्तंवरानने ॥ महाभयेसमुत्पन्नेसप्तावृत्तंस
मुन्नयेत् ॥ नवावृत्ताद्भवेच्छान्तिर्वाजपेयफलंभवेत् ॥
राजवश्यायभूत्यैचरुद्रावृत्तमुदीरयेत् ॥ अर्कावृत्तेकाम्य
सिद्धिर्वैरहानिश्चजायते ॥ मन्वावृत्ताद्रिपूर्वश्यांतथा
स्त्रीवश्यतामियात् ॥ सौख्यंपञ्चदशावृत्ताच्छ्रियमाप्नो
तिमानवः ॥ कलावृत्तात्पुत्रपौत्रधनधान्यागमंविदुः ॥
राज्ञाम्भीतिविमोक्षायवैरस्योच्चाटनायच ॥ कुर्यात्स
प्तदशावृत्तंतदाष्टादशकंप्रिये ॥ महारणविमोक्षायविं
शावृत्तंपठेत्सुधीः ॥ पंचविंशावर्त्तनात्तुभवेद्बंधविमोक्ष
णम् ॥ संकटेसमनुप्राप्तेदुश्चिकित्स्यामयेतथा ॥ जाति

ध्वंसेकुलोच्छेदेआयुषोनाशआगते ॥ वैरिवृद्धौव्या
धिवृद्धौधननाशेतथाक्षये ॥ तथैवात्रिविधोत्पातेतथाचै
वातिपातके ॥ कुर्याद्यत्नाच्छतावृत्तंततःसंपद्यतेशुभम् ॥
श्रेयोवृद्धिश्शतावृत्ताद्राज्यवृद्धिस्तथापरा ॥ मनसाचिं
तितंदेविसिद्ध्येदष्टोत्तराच्छतात् ॥ शताश्वमेधयज्ञानां
फलमाप्नोतिसुव्रते ॥ सहस्रावर्त्तनाल्लक्ष्मीरावृणोति
स्वयंस्थिरा ॥ भुक्त्वामनोरथान्कामान्नरोमोक्षमवाप्नु
यात् ॥ यथाश्वमेधकर्तॄणांदेवानांचयथाहरिः ॥ स्त
वानामपिसर्वेषांतथासप्तशतीस्तवः ॥ अथवाबहुनोक्ते
नकिमेतेनवरानने ॥ चंड्याःशतावृत्तिपाठात्सर्वाःसि
द्ध्यन्तिसिद्धयइति ॥ पाठश्चनारायणादीन्नमस्कृत्य
कार्यम् ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवीं
सरस्वतींव्यासंततोजयमुदीरयेदितिवचनात् ( जय
शब्दार्थश्चभविष्यपुराणे ) अष्टादशपुराणानिरामस्यच
रितंतथा ॥ विष्णुधर्मादिशास्त्राणिशिवधर्माश्चभारत ॥
कृत्स्नंचपंचमोवेदोयन्महाभारतंस्मृतम् ॥ शैवाश्चधर्म
राजेन्द्रमानवोक्तामहीपते ॥ जयेतिनामएतेषांप्रवदन्ति
मनीषिण इति ( पाठप्रकारश्चमात्स्ये ) प्रणवंचादितो
जप्त्वास्तोत्रंवासहितंजपेत् ॥ अंतेचप्रणवंदद्यादन्यथा
विफलंभवेत् ॥ शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्नतः ॥
नकार्यासक्तमनसाकार्यस्तोत्रस्यवाचनम् ॥ आधारेस्था
पयित्वातुपुस्तकंप्रजपेत्सुधीः॥ हस्तसंस्थापनादेवयस्मा
दल्पफलम्भवेत् ॥ स्वयंचालिखितंयच्चकृतिनालिखित
ञ्चयत् ॥ अब्राह्मणेनलिखितन्तच्चापिविफलम्भवेत् ॥

(कृतीलेखकः) तदुपजीवीइत्यर्थः ॥ ऋषिच्छन्दादिकं न्यस्यपठेत्स्तोत्रंविचक्षणः ॥ सङ्कल्पितेस्तोत्रपाठेस ङ्ख्यांकृत्वापठेत्सुधीः ॥ अध्यायंप्राप्यविरमेन्नतुमध्ये कदाचन॥ कृतेविरामेमध्येतुअध्यायादिंपठेत्पुनरिति॥ श्रवणंचब्राह्मणादेवकार्यम् ॥ ब्राह्मणंवाचकंविद्धि नान्यवर्णजमादरात् ॥ श्रुत्वान्यवर्णजाद्राजन्वाचका न्नरकम्व्रजेदिति (भविष्यपुराणे॥ यद्यपिदेवीपुराणे) जपपूजावद्धोमोऽपिप्रत्यहमुक्तस्तथापिअष्टम्यांनवम्यां वाकार्यः (ब्रह्मपुराणे) तत्राष्टम्यांभद्रकालीत्युपक्रम्य होमैर्ब्राह्मणतर्पणैरित्यष्टमीकृत्यमध्येपाठात् ॥ नवम्यां बलिदानञ्चकर्त्तव्यंवैयथाविधि ॥ जपहोमञ्चविधिवत्कु र्य्यात्तत्रविभूतयइति (कालिकापुराणाच्छिष्टाचाराच्च) बलिदानमष्टमीनवम्योरेव ॥ पुनःपूजातथाष्टम्यांविशे षेणसमाचरेदितिकालिकापुराणात्॥ अत्रयद्यपिशिष्टप रिगृहीतकालिकापुराणादिषुमद्यस्वगात्ररुधिरपशुघाता दिकमुक्तन्तथापिब्राह्मणस्यनभवति ॥ मद्यन्दत्वाब्रा ह्मणस्तुब्राह्मण्यादेवहीयते ॥ स्वगात्ररुधिरन्दत्वाब्रह्म हत्यामवाप्नुयादितिकालिकापुराणेनिषिद्धत्वात् ॥ सा त्विकीजपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैरित्येतत्प्रकारकसा त्विकपूजायाभगवद्गीतादिषु ब्राह्मणाधिकारिकतायाए वोक्तेः॥ पशुबलिदानस्यतुविजयार्थंनृपोत्तमइतिराजपु रस्कारेणैवविहितत्वाच्च ॥ अतोमाषभक्तादिनातेनब लिदानंकार्यम् ॥ माषकुल्माषमांसाद्यैर्देयोदिक्षुबलिर्नि शि॥ कूष्माण्डामिक्षु दण्डश्चमद्यमासवएवच ॥ एतेब

लिसमाञ्ज्ञेयातृप्त्यै छागसमामताइतिकालिकापुराणात् (अथकुमारीपूजादेवीपुराणे॥ ब्रह्मोवाच) नतथातुष्यते शक्रहोमदानजपादिना॥ कुमारीपूजनेनात्रयथादेवी प्रसीदति (अत्रनवरात्रे) शुक्लाष्टमीचतुर्दश्योर्नवम्यांच विशेषतःइतिच॥ प्रसङ्गादन्यत्रापिविधानम् (कुमारी पूजनेविशेषोमदनरत्नेस्कान्दे) एकैकाम्पूजयेत्कन्या मेकवृद्ध्यातथैवच॥ द्विगुणंवापिप्रत्येकन्नवकन्नवकन्तु वा॥ एकवर्षातुयाकन्यापूजार्थेतांविसर्जयेत्॥ गन्ध पुष्पफलादीनांप्रीतिस्तस्यानविद्यते॥ द्विवर्षकन्यामा रभ्यदशवर्षावधिक्रमात्॥ यथोक्तालाभेतुदेवीपुराणेवि वाहानन्तरङ्कन्याऽकन्यात्वमुपजायते॥ तावत्सम्पूज्य तेकन्यायावत्पुष्पन्नदृश्यतेइति (पूजामंत्रस्तुस्कान्दे) मं त्राक्षरमयींलक्ष्मींमातृणांरूपधारिणीम्॥ नवदुर्गात्मि कांसाक्षात्कन्यामावाहयाम्यहम्॥ जगत्पूज्येजगद्वन्द्ये सर्वशक्तिस्वरूपिणि॥ पूजांगृहाणकौमारिजगन्मातर्न मोऽस्तुते॥ एवमभ्यर्चनंकुर्यात्कुमारीणांप्रयत्नतः॥ क ञ्चुकैश्चैववस्त्रैश्चगन्धपुष्पाक्षतादिभिः॥ नानाविधैर्भ क्ष्यभोज्यैर्भोजयेत्पायसादिभिः॥ अत्रापूज्यकन्यास्व रूपमुक्तंतत्रैव॥ हीनाधिकाङ्गींकुष्ठाञ्चविनाशिकुलस म्भवाम्॥ ग्रन्थिस्फुटितशीर्णाङ्गींरक्तपूयव्रणाङ्किताम्॥ जात्यन्धाङ्केकराङ्काणांकुरूपान्तनुरोमशाम्॥ सन्त्यजे द्रोगिणीङ्कन्यान्दासीगर्भसमुद्भवामितिदेवीपुराणात्॥ ज्योतिश्शास्त्रेसप्तम्यांबिल्वशाखापूजोक्ता॥ आश्विन स्यसितेपक्षेसुमुहूर्त्तेनसप्तमी॥ तस्याञ्चपत्रिकापूजाकर्त्त

व्यानवनायकैः॥ प्रशस्तांसफलांबिल्वशाखामाहृत्यपूज येदिति (अथबोधनप्रकारस्तत्कालः ॥ लैङ्गे) कन्यायां कृष्णपक्षेपूजयित्वाइषेदिवा ॥ नवम्याम्बोधयेद्देवीम हाविभवविस्तरैः (भविष्ये) षष्ठ्यांबिल्वतरौबोधंसायं सन्ध्यासुकारयेत्(देवीपुराणे)ज्येष्ठानक्षत्रयुक्तायांषष्ठ्यां बिल्वाभिमंत्रणम् ॥ बिल्ववृक्षायनमइतिबिल्वन्तरुंस म्पूज्य ॥ बिल्ववृक्षेजयन्तीत्यादिदुर्गेइहागच्छेत्यादि नाचदुर्गामावाह्यपूजयित्वागीतवाद्यघोषपुरःसरंदेवींबो धयेत्(मंत्रस्तु) रावणस्यवधार्थायरामस्यानुग्रहायच ॥ अकालेब्रह्मणाबोधोदेव्यास्तवकृतापुरा ॥ इषेमासिसि तेपक्षेनवम्यांमार्गयोगतः ॥ श्रीवृक्षेबोधयामित्वांयाव त्पूजाङ्करोम्यहम् ॥ षष्ठ्यान्तुइषेइत्यादेःस्थाने ॥ अ हमप्याश्विनेषष्ठ्यांसायाह्नेबोधयाम्यतइति (ततोबि ल्वतरोरामंत्रणम् ॥ मंत्रस्तु) मेरुमन्दरकैलाशहिमव च्छिखरेगिरौ॥जातःश्रीफलवृक्षत्वमम्बिकायाःसदाप्रि यःश्रीशैलशिखरेजातश्रीफलश्रीनिकेतन ॥ नेतव्योसि मयावृक्षपूज्योदुर्गास्वरूपतइति ॥ अपरेद्युःपुनरपिस म्पूज्यकृतांजलिःप्रसादयेत् ॥ बिल्ववृक्षमहाभागसर्व दाशङ्करप्रिय ॥ गृहीत्वानवशाखांतुदुर्गापूजांकरोम्यह म् ॥ शाखाच्छेदोद्भवंदुःखंनचकार्य्यंत्वयाप्रभो इति॥ ततः फलयुतामपराजितदिग्गतांएकांशाखांछिदयेद्धान स्यत्येनमन्त्रेण ॥ क्वचित्तुछिंधिफट्ॐस्वाहेतिमन्त्रः॥ ततःशाखांगृहेआनीयबिल्वशाखायैनमइति पूजयित्वा शाखांमृण्मयप्रतिमायाञ्च देवीमावाहनपुरस्सरंपूजयि

त्वामाषभक्तादिबलिंचदत्वादोलादिनाशाखांप्रतिमाञ्च पूजागृहेद्वारदेशेस्थापयित्वापूजागृहस्था यिभूतेभ्योनम इतिगन्धादिभिः सम्पूज्यभूताःप्रेताःपिशाचाश्चयेवस न्त्यत्रभूतले ॥ गृह्णंतुंतेमयादत्तोबलिरेषप्रसाधितः ॥ पूजितागन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा ॥ देशादस्मा द्विनिःसृत्यपूजांपश्यंतुमत्कृताम् ॥ भूतेभ्यएषमाषभक्त बलिर्नमइतिबलिंदत्वा ॥ अपसर्पन्तुयेभूतायेभूताभू मिपालकाः ॥ भूतानामविरोधेनपूजाकर्म्मकरोम्यह म् ॥ फडितितानपसारयेत् ॥ स्थितेषुतत्रभूतेषुनैवे द्यंमण्डलंतथा ॥ विलुम्पन्तिमहालुब्धानचगृह्णन्ति देवताः ॥ तस्माद्यत्नेनकर्त्तव्यंभूतानामपसारणमिति कालिकापुराणात् ॥ सर्षपादींश्चावकिरेत्ततःपुनश्शाखा यांप्रतिमायांचदेवींसम्पूज्यगीतवाद्यादिपुरस्सरंपूजागृ हंप्रवेश्य ॥ आरोपितासिदुर्गेत्वंमृण्मयेश्रीफलेऽपिच ॥ स्थिरानितांतंभूत्वामेगृहेत्वंकामदाभवेतिपूजागृहेस्थाप येत् ( ततःप्राणप्रतिष्ठांकृत्वा ) आवाहयाम्यहंदेवीं मृण्मयेश्रीफलेतथा ॥ कैलाशशिखराद्देविविंध्याद्रेर्हि मपर्वतात् ॥ आगत्यबिल्वशाखायांचाण्डिकेकुरुसंनि धिम् ॥ भगवतिदुर्गेइहागच्छेत्युभयोरावाह्य ॥ स्था पितासिमहादेवीश्रीफलेमृण्मयेऽपिच ॥ आयुरारोग्य मैश्वर्य्यंदेहिदेविनमोऽस्तुते ॥ भगवतिदुर्गेइहातिष्ठे तिस्थापयित्वा ॥ दुर्गेदुर्गस्वरूपासिसुरतेजोमहाबले ॥ सदानन्दकरेदेविप्रसीममसिद्धये ॥ एह्येहिभगवत्य म्बशत्रुक्षयजयप्रदे ॥ भक्तितःपूजयामित्वांदुर्गेदेविसुरा

र्च्चिते ॥ पल्लवैश्चफलोपेतैःपुष्पैश्चसुमनोहरैः ॥ पल्लवे संस्थितेदेविपूजयेत्वांप्रसीदमे ॥ दुर्गेदेविइहागच्छसांनिध्यमिहकल्पय ॥ यज्ञभागानगृहाणत्वंयोगिनीकोटिभिःसहेतिकृताञ्जलिःपठेत् ॥ ततोजयन्तीत्यादिदुर्गायैनमः ॥ इदंपाद्यंपुष्पगन्धाक्षतकुंकुमदधिदूर्वांकुशतिल बिल्वपत्रसहितजलेनार्घ्यमाचमनीयंपञ्चामृतस्नानीयंपुनराचमनीयवस्त्रेपुनराचमनीयानुलेपनानिदत्वा ॥ ॐ दुर्गायैनमइतिपुष्पांजलित्रयंदद्यात् ॥ ततः॥ अमृतोद्भवंश्रीवृक्षोत्थंशंकरस्यसदाप्रियम् ॥ बिल्वपत्रंप्रदास्यामिपवित्रंतेसुरेश्वरीतिबिल्वपत्रम् ॥ ब्रह्मविष्णुशिवादीनांद्रोणपुष्पंसदाप्रियम् ॥ तत्तेदुर्गेप्रयच्छामिसर्व्वकामार्थसिद्धयेइति ॥ द्रोणपुष्पञ्चनिवेद्यजयन्तीत्यादिनापुष्पधूपदीपनैवेद्यपुनराचमनीयतांबूलानिदत्वापूजाषाड्गुण्यार्थं दक्षिणांदत्वास्तुतिभिस्स्तुत्वाप्रणम्यबद्धांजलिःप्रार्थयेत् ॥ महिषघ्निमहामायेचामुण्डेमुण्डमालिनि ॥ द्रव्यमारोग्यमैश्वर्य्यंदेहिदेविनमोऽस्तुते ॥ कुंकुमेनसमालब्धेचन्दनेनविलेपिते ॥ बिल्वपत्रकृतापीडेदुर्गेऽहंशरणागतः ॥ सर्वमङ्गलेतिरूपंदेहीतिचश्लोकंपठेत्बलिंचदद्यात् ॥ एवमेवमहाष्टम्यामपिदेवीपूजनंविशेषतस्त्वर्द्धरात्रेजागरणञ्च ॥ राजातुविजयकामोऽर्द्धरात्रेविशेषपूजापूर्वकंबलिंदद्यात् ॥ तदर्द्धयामिनीशेषेविजयार्थंनृपोत्तम ॥ पंचाब्दंलक्षणोपेतंगन्धधूपसमर्प्पितम् ॥ विधिवत्कालिकालीतिजप्त्वा खड्गेनघातयेदितिदेवीपुराणात् ॥ पंचाब्दंमाहिषंमज

वा ॥ तत्रैवशस्त्रादिपूजनंकुर्य्यात् ॥ महानवम्यामेव पूजाबलिदानंहोमश्च ॥ जयन्तीत्यादि ॥ अनेनैवतुम न्त्रेणजपहोमादिकारयेत् इतिदेवीपुराणात् ॥ द्रव्यंतत्रै वोक्तम् ॥ पूजयेत्तिलहोमैश्चदधिक्षीरघृतादिभिरिति॥ केचित्तुप्रतिश्लोकंच जुहुयात्पायसंतिलसर्पिषेतिरहस्य ग्रंथेवचनात् ॥सप्तशतीस्तवेनप्रतिश्लोकंतिलसर्पिर्मिश्र पायसेनहोमंकुर्वंति॥ राज्ञात्वश्वपीडाशांतयेब्रह्मपुराणो क्तरैवतपूजाऽपिकार्या ॥सचवडवारूपायामूषायांसूर्य्या दुत्पन्नोवाजिगणाधिपः (पूजामंत्रः) शालिहोत्रे ॥ नमो देवाधिदेवायतुरंगबलिचारिणे ॥ सूर्यपुत्रायदेवायतुरंग महितायच ॥ तुरंगपरिषद्यस्यनृगजोपरिधावति॥साश्व मश्वाधिपंरक्षसतूणंत्वांव्रजाम्यहम् ॥ मंत्रेणानेनरैवतं पाद्याद्यैरर्चयेत्सुधीः ॥ दशम्यांप्रातःपूजांविधायविस र्जयेत् ॥ संपूज्यप्रेषणंकुर्याद्दशम्यांशावरोत्सवैरितिभ विष्यपुराणात् ॥ ततःसंप्रेषितादेवीदशम्यांशवरोत्सवै रितिकालिकापुराणाच्च ॥ एवंपूजांविधायप्रणम्य ॥ दुर्गांशिवांशांतिकरींब्राह्मणींब्रह्मणःप्रियाम् ॥ सर्वलो कप्रणेत्रींचप्रणमामिसदाशिवाम् ॥ मंगलांशोभनांशु द्धांनिष्कलांपरमांकलाम् ॥ विश्वेश्वरींविश्वधात्रींच ण्डिकांप्रणमाम्यहम् ॥ सर्वदेवमयींदेवींसर्वरोगभया पहाम् ॥ ब्रह्मेशविष्णुनमितांप्रणमामिसदाउमाम् ॥ विन्ध्यस्थांविन्ध्यनिलयांविन्ध्यस्थाननिवासिनीम् ॥ योगिनींयोगजननींचण्डिकांप्रणमाम्यहम् ॥ ईशान मातरंदेवीमीश्वरीमीश्वरप्रियाम् ॥ प्रणतोऽस्मिसदा

दुर्गांसंसारार्णवतारिणीम् ॥ यइदंपठतिस्तोत्रंशृणुया द्वापियोनरः ॥ समुक्तःसर्वपापेभ्योदुर्गयासहमोदतेइ त्यादिभिःस्तोत्रैःस्तुत्वाबद्धांजलिर्महिषघ्नीत्यादिश्लोक चतुष्टयेनप्रार्थ्यम् ॥ विधिहीनंक्रियाहीनंभक्तिहीनंयद र्चितम् ॥ पूर्णंभवतुतत्सर्वंत्वत्प्रसादान्महेश्वरीतिप्रसा द्यत्वमस्वेत्युक्ता ॥ एवंपुष्पंॐदुर्गायैनमइत्यैशान्यांनि क्षिपन्विसृज्य ॥ उत्तिष्ठदेविचण्डेशिशुभांपूजांप्रगृह्य च ॥ कुरुष्वममकल्याणमष्टाभिःशक्तिभिःसह ॥ ग च्छगच्छपरंस्थानंस्वस्थानंदेविचण्डिके॥ व्रजस्त्रोतोज लेवृद्ध्यैतिष्ठगेहेचभूतये ॥ इत्युत्थाप्यगीतवाद्यब्रह्मघो षपुरःसराम् ॥ स्त्रोतोजलसमीपंगत्वा ॥ दुर्गेदेविजग न्मातःस्वस्थानंगच्छपूजिते ॥ संवत्सरेव्यतीतेतुपुनरा गमनायवै ॥ इमांपूजांमयादेवियथाशक्त्यानिवेदिता म् ॥ रक्षणार्थंसमादायव्रजस्वस्थानमुत्तममितिप्रवा हयेत् ॥ ततोदेवीपूजास्थानेशान्तिकलशोदकेनब्राह्म णैरभिषिक्तस्तेभ्योदक्षिणांदत्वाब्राह्मणान्भोजयित्वाबं धुभिःसार्द्धंभुंजीत (अथलोहाभिसारिकंकर्मभविष्योत्त रे) जयाभिलाषीनृपतिःप्रतिपत्प्रभृतिक्रमात् ॥ लोहा भिसारिकंकर्मकारयेद्यावदष्टमी ॥ प्रागुदक्प्रवणेदेशे पताकाभिरलंकृते ॥ मण्डपंकारयेद्दिव्यंनवसप्तकरंवर म् ॥ आग्नेय्यांकारयेत्कुंडंहस्तमात्रंसुशोभनम् ॥ मे खलात्रयसंयुक्तंयोन्याचलदलाभया ॥ राजचिह्नानिस र्वाणिशस्त्राण्यस्त्राणियानिच ॥ आनीयमंडपेतानिस र्वाण्येवाधिवासयेत् ॥ ततस्तुब्राह्मणःस्नातःशुक्लांबर

धरःशुचिः ॥ ॐकारपूर्वकैर्मंत्रैस्तार्ल्लिगैर्जुहुयाद्घृतम् ॥ शस्त्रास्त्रमंत्रैर्होतव्यंपायसंघृतसंयुतम् ॥ हुतशेषंतुरंगाणांगणनामुपहारयेत् ॥ बद्धप्रतिसरान्पंचगजाश्वान् समलंकृतान् ॥ भ्रामयेन्नगरेनित्यंनन्दिघोषपुरस्सरान् ॥ प्रत्यहंनृपतिस्स्नात्वासंपूज्यपितृदेवताः ॥ पूजयेद्राजचिह्नानिफलमाल्यविलेपनैः ॥ हुतशेषंप्रदातव्यं श्रौयनायनिकेजने ॥ लोहनामाभवत्पूर्वमसुरःसुमहाबलः॥सदेवैःसमरेक्रुद्धैर्बहुधाशकलीकृतः॥ तदंगसंभवं सर्वंलोहंयद्दृश्यतेक्षितौ॥ तस्याभिहरणाद्राज्ञोविजयःसमुदाहृतइति(पूजामंत्रास्तुतत्रैव) यथाम्बुदश्छादयति शिवायेमांवसुंधराम्॥ तथाच्छादयराजानंविजयारोग्यसिद्धये (छत्रस्य) शशांककरसंकाशक्षीरहिंडीरपांडुर ॥ प्रोत्सारयाशुदुरितंचामरामरभूषण ॥ (चामरस्य) शक्रकेतोमहावीर्यसुपर्णस्त्वय्युपाश्रितः ॥ पतत्रिराड्वैनतेयस्तथानारायणध्वजः ॥ काश्यपेयोमृताहर्त्तानागारिबलवाहनः॥ अप्रमेयोदुराधर्षोरणेदेवारिसूदनः ॥ गरुत्मान्मारुतगतिस्त्वयिसन्निहितस्थितः ॥ शस्त्रवर्मायुधान्योधान्रक्षत्वञ्चरिपून्दह (ध्वजस्य) हुतभुग्वसवोरुद्रावायुःसोमोमहर्षयः॥ नागकिन्नरगन्धर्वायक्षभूतगणाग्रहाः ॥ प्रथमाश्चसहादित्यैर्भूतेशामातृभिस्सह ॥ शक्रस्सेनापतिस्स्कन्दोवरुणश्चाश्रितस्त्वयि ॥ प्रदहन्तुरिपून्सर्वान्राजाविजयमृच्छतु॥ यानिप्रयुक्तान्यरिभिर्दूषणानिसमन्ततः ॥ एतानिसर्वशत्रूणांहतानितवतेजसा ॥ कालनेमिबधेयद्वद्यद्वत्त्रिपुरघातने ॥ हि

रण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा ॥ शोभितासितथैवाद्य शोभस्वसमयंस्मर ॥ नीलाम्बरामिमांदृष्ट्वानश्यन्त्वा शुममारयः (इतिपताकायाः) दुन्दुभेत्वंसपत्नानांघो षाद्धृदयकम्पनः ॥ भवभूमिपसैन्यानांतथात्वंजयवर्द्ध न ॥ यथाजीमूतघोषेणहृष्यन्तेवरवारणाः ॥ तथातु तवशब्देनहर्षोऽस्माकञ्जयावहः (इतिदुन्दुभेः) पुण्य स्त्वंशङ्खपुण्यानांमङ्गलानाञ्चमङ्गलम् ॥ विष्णुनात्वन्धृ तोनित्यमतश्शान्तिंप्रयच्छमे (इतिशंखस्य) महेन्द्र निर्मितेदिव्येदेवराजादिसेविते ॥ शिविकेपाहिमान्नि त्यंसदात्वंसन्निधौभव (इतिशिविकादोलिकयोः) वि जयोजयदोजेतारिपुघातीशुभावहः ॥ दुःखहाधर्मद श्शान्तस्सर्वारिष्टविनाशनः ॥ एतेवैसन्निधौयस्मात्तव सिंहमहाबलः ॥ तेनसिंहासनेतित्वंदेवैर्मंत्रैश्चगीयसे ॥ त्वयिस्थितश्शिवस्साक्षात्त्वयिशक्रस्सुरेश्वरः॥ त्वयस्थि तोहरिर्देवस्त्वदर्थंतप्यतेतपः ॥ नमस्तेसर्वतोभद्रभद्र दोभवभूपतेः ॥ त्रैलोक्यंजयसर्वत्रसिंहासननमोऽस्तुते (इतिसिंहासनस्य) गन्धर्वकुलजातस्त्वंमाभूयाःकुलदू षकः ॥ ब्रह्मणःसत्यवाक्येनसोमस्यवरुणस्यच ॥ ते जसाचैवसूर्यस्यमुनीनांतपसासदा ॥ रुद्रस्यब्रह्मचर्येण पवनस्यबलेनच ॥ प्रभावाच्चहुताशस्यवर्द्धस्वत्वंतु रंगम ॥ स्मरत्वंराजपुत्रोऽसिकौस्तुभंचमणिंस्मर ॥ सुरासुरैर्मथ्यमानात्क्षीरोदादमृतादिभिः ॥ जातउच्चै श्श्रवाःपूर्वंतेनजातोऽसितत्स्मर ॥ यांगतिंब्रह्महागच्छे न्मातृहापितृहातथा ॥ भूम्यर्थेनृतवादीचक्षात्रियाश्चप

राङ्मुखाः ॥ सूर्याचंद्रमसौवायुर्यावत्पश्यंतिदुष्कृतम् ॥ व्रजत्वंतांगतिंक्षिप्रंतच्चपापंभवेत्तव ॥ विकृतिंयदिग च्छेस्त्वंयुद्धाध्वनितुरंगम ॥ रिपून्विजित्यसमरेसहभ र्त्तासुखीभव (इत्यश्वस्य) कुमुदोरावणःपद्मःपुष्पदन्तो ऽथवामनः॥ सुप्रतीकोंजनोनीलएतेऽष्टौदेवयोनयः॥ ते षांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रिताः॥मन्दोभद्रोगज श्चैवराजसंकीर्णएवच॥ वनेवनेप्रसूतास्तेयूथानिसुमहा न्तिच ॥ पांतुत्वांवसवोरुद्राआदित्यास्समरुद्गणाः ॥ भर्त्तारंरक्षनागेंद्रस्वामीचप्रतिपाल्यताम् ॥ अवाप्नुहि जयंयुद्धेगमनेस्वस्तिनोव्रज (इतिगजस्य) प्रोत्सारणाय दुष्टानांसाधुसंग्रहणायच ॥ ब्रह्मणानिर्मितश्चासिव्य वहारस्यसिद्धये॥ यशोदेहिसुखंदेहिजयदोभवभूपतेः॥ ताडयत्वंरिपून्सर्वान्हेमदण्डनमोऽस्तुते (इतिकनक दण्डस्य) सर्वायुधानांप्रथमंनिर्मिताऽसिपिनाकिना॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभम् ॥ चंडिकायै प्रदत्तासिसर्वदुष्टनिवर्हिणी ॥ तयाविस्तारिताचासिदे वानांप्रतिवारिता ॥ सर्वसत्वांगभूताऽसिसर्वदुष्टनिवर्हि णि॥ छुरिकेरक्षमांनित्यंशान्तिंयच्छनमोऽस्तुते (इति छुरिकायाः) रक्षांगानिगजान्रक्षरक्षबाजिधनानिच॥ ममदेहंसदारक्षकटारकनमोऽस्तुते (इतिकटारस्य) स र्वायुधमहामात्रसर्वदेवारिसूदन ॥ चापमांसमरेरक्षसा कंसायकसत्तमैः॥धृतंकृष्णेनरक्षार्थंसंहारार्थंहरेणच॥ त्र यीमूर्त्तिगतंदेवधनुरस्त्रंनमाम्यहम् (इतिधनुषः)शर्मप्रद स्त्वंसमरेवर्मसैन्येयशोद्यमे ॥ रक्षमांरक्षणीयोऽहन्ताप

नेयनमोऽस्तुते ( इतिवर्म्मणः ) प्रासतापयशत्रूंस्त्वमनया लोकमायया ॥ गृहाणजीवितन्तेषांममसैन्यञ्चरत्तय ( इतिकुन्तस्य) अरेर्विनाशनःखड्गस्तीक्ष्णधारोदुरासदः ॥ श्रीगर्भोविजयश्चैवधर्मधारस्तथैवच ॥ इत्यष्टौतवनामानिपूर्वमुक्तानिवेधसा ॥ नक्षत्रंकृत्तिकातुभ्यंगुरुर्देवोमहेश्वरः॥ हिरण्यञ्चशरीरन्तेधातादेवोजनार्दनः॥ पिता पितामहोदेवस्त्वंमांपालयसर्वदा ॥ इयंयेनधृताक्षोणी हतश्चमहिषासुरः ॥ तीक्ष्णधारायशुद्धायपरखड्गायते नमः (इतिखड्गस्य) लोहाभिसारिकङ्कर्मकृत्वैवंमंत्रपूर्वकम् ॥ जयंप्राप्नोतिनृपतिःसर्वान्कामान्समश्नुते (इतिलोहाभिसारिकम् ॥ अत्रसूतकेविशेषोविश्वरूपनिबन्धे) आश्विनेशुक्लपक्षेतुप्रारब्धेनवरात्रके ॥ शावाशौचेसमुत्पन्नेक्रियाकार्याकथम्बुधैः ॥ देवीपूजाप्रकर्त्तव्या पशुयज्ञविधानतः ॥ सूतकेपूजनंप्रोक्तन्दानञ्चैवविशेषतः ॥ देवीमुद्दिश्यकर्त्तव्यंतत्रदोषोनविद्यते ॥ सूतके पारणंकुर्यान्नवम्यांहोमपूर्वकम् ॥ तदन्तेभोजयेद्विप्रान् दानन्दद्याच्चशक्तिभिः ॥ तदन्तेसूतकान्तइत्यर्थः(तथा) मलमासेनकर्त्तव्येनवदुर्गोत्सवव्रतम् ॥ अस्तङ्गतेगुरौशुक्रेसिंहस्थेविबुधाधिपे ॥ देवपूजनमुद्दिष्टंस्थविरेवालके तथा ॥ आद्यारम्भेविरामःस्याद्द्वितीयादौनचिन्तयेदिति (तथास्त्रीणांविशेषउक्तोगरुडपुराणे) गन्धालङ्कारताम्बूलपुष्पमाल्यानुलेपनम् ॥ उपवासेनदुष्यन्तिदन्तधावनमञ्जनमिति (इतिनवरात्रकृत्यम् ) कार्त्तिकशुक्लप्रतिपत्पूर्वविद्धाग्राह्या ॥ पूर्वविद्धाप्रकर्त्तव्याशिवरात्रिबले

र्दिनमितिवृहद्यमोक्तेः(माधवोऽपि) बल्युत्सवश्चपूर्वेद्युरु
पवासवदाचरेदिति ॥ पूर्वविद्धायामित्यर्थः ॥ इहतैला
भ्यङ्गआवश्यकः (तथावृद्धवशिष्ठः) वत्सरादौवसन्तादौ
बलिराज्येतथैवच ॥ तैलाभ्यङ्गमकुर्वाणोनिरयंप्रतिपद्य
तेइति ॥अत्रविशेषोहेमाद्रौस्कान्दे॥प्रातर्गोवर्द्धनःपूज्यो
द्यूतश्चापिसमाचरेत् ॥ पूजनीयास्तथागावस्त्याज्येवा
हनदोहने (मंत्रः) गोवर्द्धनधराधारगोकुलत्राणकारक॥
बहुबाहुकृतच्छायागवाङ्कोटिप्रदप्रभो ( गोपूजामंत्रः )
यालक्ष्मीर्लोकपालानांधेनुरूपेणसंस्थिता ॥ घृतंवहति
यज्ञार्थेममपापंव्यपोहतु ॥ अग्रतःसंतुमेगावोगावोमेसं
तुपृष्ठतः ॥गावोमेसंतुहृदयेगवांमध्येवसाम्यहमिति ॥
ततोऽपराह्णसमयेपूर्वस्यांदिशिभारत ॥ मार्गपालींप्रब
ध्नीयाच्चुंगस्तम्भेऽथपादपे॥ कुशकाशमयींदिव्यांलंबकै
र्बहुभिर्मुने: ॥ ( मंत्रः ) मार्गपालिनमस्तेऽस्तुसर्वलोक
सुखप्रदे ॥ विधेयैःपुत्रदाराद्यैःपुनरेभिर्वृतस्यमे ॥ मा
र्गपालीतलेनेत्थंयांतिगावोगजावृषाः॥ राजानोराजपु
त्राश्चब्राह्मणाश्शूद्रजातयः॥ मार्गपालीःसमुल्लंघ्यनी
रजस्स्युस्सुखान्विताइति (भविष्ये) कृत्वैतत्सर्वमेवेह
रात्रौदैत्यपतेर्बलेः ॥ पूजांकुर्यान्नृपःसाक्षाद्भूमौमंडल
केशुभे ॥ बलिमालिख्यदैत्येंद्रंवर्णकैःपञ्चरङ्गकैः ॥ पु
ष्पैश्चपूजयेत् (मंत्रस्तु) बलिराजनमस्तेऽस्तु देवदानव
वन्दित ॥ इंद्रशत्रोमहाशस्त्रविष्णुसांनिध्यदोभवेति॥
(ब्राह्मे)तस्माद्द्यूतंप्रकर्त्तव्यंप्रभातेतत्रमानवैः॥तास्मिन्
द्यूतेजयोयस्यतस्यसंवत्सरंजयः ॥ पराजयोविरुद्धश्च

लाभनाशकरोभवेत् ॥ दयिताभिश्चसहितैर्नेयासाच भवेन्निशेति (इतिप्रतिपन्निर्णयः ॥ अथद्वितीया ) सा तुपरैवयुग्माग्नीतिवचनात् ॥ एकादश्यष्टमीषष्ठीद्विती याचचतुर्दशी ॥ त्रयोदशीअमावास्याउपोष्यास्स्युःप रान्विताइतिविष्णुधर्मोत्तराच्च (अत्रविशेषःस्कांदे ) आ षाढस्यासितेपक्षेद्वितीयापुष्यसंयुता ॥ तस्यांरथेसमारो प्यरामंवैभद्रयासह ॥ यात्रोत्सवंप्रवृत्यर्थंप्रीणयेतद्वि जान्बहून् ॥ भद्रासुभद्रा ॥ श्रावणकृष्णद्वितीयावृह त्तयोच्यते ॥ सापूर्वविद्धाग्राह्या ॥ ( तदाहसंवर्त्तः ) कृ ष्णाष्टमीवृहत्तयासावित्रीवटपैतृकी ॥ कामत्रयोदशीरं भाउपोष्याःपूर्वसंयुताइति ॥ उपोष्यासेवनीयाइति ॥ कार्त्तिकशुक्लद्वितीयायमद्वितीयोच्यते ॥ सापराह्णव्यापि नीग्राह्या ॥ कर्मकालवाक्यात्तदुक्तंस्कांदे ॥ ऊर्ज्जेशु क्लद्वितीयायांपूजितस्तर्पितोयमः ॥ वेष्टितःकिन्नरैर्हृष्टै स्तस्मैयच्छतिवांछितम् (भविष्येऽपि) कार्त्तिकेशुक्लप क्षस्यद्वितीयायांयुधिष्ठिर ॥ यमोयमुनयापूर्वंभोजित स्स्वगृहेर्चितः ॥ अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता ॥ अस्यांनिजगृहेविप्रनभोक्तव्यंततोनरैः ॥ स्नेहेनभगि नीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनम् ॥ दानानिचप्रदेयानिभ गिनीभ्योविशेषतः ॥ स्वर्णालंकारवस्त्रान्नपूजासंस्का रभोजनैः ॥ सर्वाभगिन्यःसंपूज्याअभावेप्रतिपन्नकाः ॥ अभावेभगिनीनांप्रतिपन्नकास्तत्स्थानीयाः (ब्रह्माण्डे ऽपि) यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ ॥ अर्चयेच्चा पिताम्बूलैर्नसावैधव्यमाप्नुयात् ॥ भ्रातुरायुःक्षयोराज

न्नभवेत्तत्रकर्हिचिदिति (इतिद्वितीयानिर्णयः ॥ अथतृ
तीया) सातुपरैव ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ एकादश्यष्ट
मीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउ
पोष्याःपरान्विताः ॥ रम्भाव्रतेतुपूर्वैव (तदुक्तंब्रह्मवैवर्त्ते)
रम्भाख्यांवर्जयित्वैकान्तृतीयांद्विजसत्तम ॥ अन्येषुशु
भकार्येषुगणयुक्ताप्रशस्यतइतिगणश्चतुर्थी ॥ चैत्रशुक्ल
तृतीयायान्दोलोत्सवोरामार्चनचन्द्रिकायाम् (गारुडे)
मधौशुक्लतृतीयायाञ्ज्ञानकीरमणम्प्रभुम् ॥ राजोपचा
रैःसम्पूज्यसासमान्दोलयेत्कलौ ॥ दक्षिणाभिमुखन्दे
वन्दोलमानंसुरेश्वरम् ॥ सम्पूजितंसकृद्दृष्ट्वासर्वपापैः
प्रमुच्यते ॥ चैत्रमासिसितेपक्षेतृतीयायांरमापतिम् ॥
दोलारूढंसमभ्यर्च्यमासमान्दोलयेत्कलौ ॥ दोलारू
ढस्यदेवस्ययेऽग्रेकुर्वन्तिजागरम् ॥ सर्वपुण्यफलावाप्ति
र्निमिषेनिमिषेभवेत् ॥ इयमेवगौरीतृतीयोच्यते ॥ तत्र
मुहूर्त्तमात्रापिपरयुताग्राह्या ॥ वचनन्त्वग्रेवक्ष्यते (मद
नरत्नेस्कान्दे विशेषः) तृतीयायांयजेद्देवींशङ्करेणसमन्वि
ताम्॥ कुंकुमागरुकर्पूरमणिवस्त्रैःसुगन्धकैः॥ स्त्रग्गन्धधू
पदीपैश्चचंदनेनविशेषतः॥ आंदोलयेत्ततोवत्सशिवोमा
तुष्टयेसदेति ॥ वैशाखशुक्लतृतीयायांत्रिलोचनयात्रोक्ता
काशीखंडे॥ राधशुक्लतृतीयायांस्नात्वायैर्लिप्यतेहृदे ॥
संतर्पयेत्पितॄन्देवान्त्रिलोचनमथार्चयेदिति (इयमेवा
क्षयतृतीयोच्यते ॥ तदुक्तम्भविष्ये) यात्वेषाकुरुशार्दूल
वैशाखेतुमहातिथिः ॥ तृतीयायाऽऽक्षयालोकेगीर्वाणैर
भिवन्दिता॥ यत्किञ्चिद्दीयतेदानंस्वल्पंवायदिवाबहु ॥

तत्सर्वमक्षयंयस्मात्तेनेयमक्षयास्मृतेति ॥ इयमेवयुगा
दिःसापूर्वाह्णव्यापिनीग्राह्या (तदुक्तन्नारदीये) द्वेशुक्लेद्वे
तथाकृष्णेयुगादिकवयोविदुः ॥ शुक्लेपौर्वाह्णिकेग्राह्येकृ
ष्णेचैवापराह्णिकेइति ॥ (अत्रविशेषोगोविन्दार्णवेदेवी
पुराणे) तृतीयायान्तुवैशाखेरोहिण्यृक्षेप्रपूज्यतु ॥ उद
कुम्भप्रदानेनशिवलोकेमहीयते (कलशदानमंत्रस्तु)ए
षधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्तृ
प्यन्तुपितरोऽपिपितामहाः ॥ गन्धोदकतिलैर्युक्तंसान्नंकु
म्भंसदक्षिणम् ॥ पितृभ्यःसंप्रदास्यामिअक्षय्यमुपति
ष्ठतुइति ॥ एतदसम्भवेतिलतर्पणङ्कार्यमित्युक्तम् (त
त्रैवविष्णुपुराणे) पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृ
भ्यःप्रयतोमनुष्यः ॥ श्राद्धंकृतन्तेनसमाःसहस्रंरहस्य
मेतन्मुनयोवदन्तीति॥ तथात्रमलमासेसतिविशेषश्चंद्रि
कायाम् ॥ यौगादिकंमासिकञ्चश्राद्धञ्चापरपक्षिकम् ॥
मन्वादिकन्तैर्थिकञ्चकुर्यान्मासद्वयेऽपिच ॥ अपरपक्षो
नामकृष्णपक्षोऽत्रगृह्यते ॥ मलमासेमहालयस्यनिषेधा
त् ॥ ज्येष्ठशुक्लातृतीयारम्भातृतीयोच्यते॥सापूर्वाग्राह्या॥
(तदुक्तंमाधवीयस्कान्दे)वृहत्तपातथारम्भासावित्रीवट
पैतृकी॥ कृष्णाष्टमीचभूताचकर्त्तव्यासंमुखीतिथिरिति॥
संमुखीनामसायाह्णव्यापिनीत्यर्थः (ब्रह्मवैवर्त्तेऽपि) रंभा
ख्यांवर्जयित्वैकान्तृतीयांद्विजसत्तम ॥ अन्येषुशुभकार्ये
षुगणयुक्ताप्रशस्यतेइतिगणचतुर्थी॥ भाद्रकृष्णतृतीया
यामुपवासपरैर्नृभिः ॥ कृत्वाजागरणंरात्रौविशालाक्षीस
मीपतइति ॥ अत्ररात्रिव्यापिनीग्राह्या ॥ रात्रौजागरण

विधानात्॥भाद्रशुक्लतृतीयाहरितालिकोच्यते॥सामुहूर्त्त
मात्रापिपरयुताग्राह्या (तदाहमाधवः) मुहूर्त्तमात्रसत्त्वेऽ
पिदिनेगौरीव्रतंचरेत्॥शुद्धाधिकायामप्येवंगणयोगप्रशं
सनादिति ॥ चतुर्थीयुक्तायांतुफलाधिक्यमाहमाधवीये
(अपस्तंबः) चतुर्थीसहितायातुसातृतीयाफलप्रदा ॥ अ
वैधव्यकरीस्त्रीणांपुत्रपौत्रप्रवर्द्धिनी ॥ द्वितीयायोगेप्रत्य
वायमप्याहसएव ॥ द्वितीयाशेषसंयुक्तांयाकरोतिविमो
हिता ॥ सावैधव्यमवाप्नोतिप्रवदन्तिमनीषिणइति ॥
यदापरेद्युःस्वल्पापिनदृश्यतेतदापिग्राह्या ॥ एकाद
शीतृतीयाचषष्ठीचैवत्रयोदशी ॥ पूर्वविद्धापिकर्त्तव्या
यदिनस्यात्परेऽहनीतिवृद्धवशिष्ठोक्तेः ॥ आश्विनकृ
ष्णतृतीयायांललितायात्रोक्ताकाशीखण्डे ॥ इषेकृष्ण
तृतीयायांललितांप्रतिपूज्यवै ॥ नारीवापुरुषोवापिल
भतेवांछितंफलमिति (इतितृतीयानिर्णयः ॥ अथचतु
र्थीनिर्णयः) सापराग्राह्या ॥ युगभूतानामितियुग्मवा
क्यात् ॥ माधवीयेवृहद्वशिष्ठोऽपि ॥ एकादशीतथाष
ष्ठीअमावास्याचतुर्थिका ॥ उपोष्याःपरसंयुक्ताःपराः
पूर्वेणसंयुताइति ॥ सर्वासुचतुर्थीषुढुंढियात्रोक्ताका
शीखण्डे ॥ कार्याप्रतिचतुर्थीतुयात्रांविघ्नेशितुःसदा॥
ब्राह्मणेभ्यस्तदुद्देशाद्देयावैमोदकामुदेतिलैंगे ॥ अङ्गार
कचतुर्थ्यांयेस्नातोत्तरवहांभसि ॥ अभ्यर्च्यांगारकेशा
नंनमस्यतिनरोत्तमाः ॥ नतेषांग्रहपीडाचकदाचित्क्का
पिजायतेइति ॥ नागचतुर्थीमध्याह्नव्यापिनीपराविद्धा
ग्राह्या ॥ तदाहगोविंदार्णवेदेवलः ॥ युगंमध्यंदिनेय

अतत्रोपोष्यफणीश्वरान् ॥ क्षीरेणाप्ययथपञ्चम्यांपूजये त्प्रयतोनरइति ॥ युगचतुर्थी ॥ विनायकव्रतेतृतीयायुतैव ॥ तदुक्तंतत्रैव ॥ चतुर्थीतुतृतीयायांमहापुण्यफलप्रदा ॥ कर्त्तव्याव्रतिभिर्वत्सगणनाथसुपोषिणीति ॥ श्रावणकृष्णचतुर्थीसंकष्टचतुर्थीत्युच्यते ॥ साचन्द्रोदयव्यापिनीग्राह्या ( तदुक्तंस्कांदे ) श्रावणेबहुलेपक्षेचतुर्थ्याश्चविधूदये ॥ तस्मिन्दिनेव्रतंकार्यंसंकष्टाख्यंसुरेश्वरीति ॥ दिनद्वयेचन्द्रोदयसत्वेऽपिपूर्वैव ॥ मातृविद्धोगणेश्वरइतिवचनात् ॥ भाद्रकृष्णचतुर्थीबहुला ( सापूर्वैवतदुक्तंगोविंदार्णवेपुराणसमुच्चये ) गौर्य्याश्चतुर्थीवटधेनुपूजादुर्गार्चनंदुर्भरलोहिकेच ॥ वत्सस्यपूजाशिवरात्रिरेताःपरान्विताघ्नन्तिनृपसराष्ट्रमिति ॥ भाद्रशुक्लचतुर्थीवरदचतुर्थीत्युच्यते ॥ सामध्याह्नव्यापिनीपूर्वविद्धाग्राह्या पूर्वदिनेमध्याह्नव्यापिनीसम्भवेपरैव ( तदुक्तंमाधवीयेबृहस्पतिना ) चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते ॥ मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेऽहनीति ( स्मृत्यंतरेऽपि ) मातृविद्धाप्रशस्तास्याच्चतुर्थीगणनायकेति ॥ मध्याह्नेपरतश्चेत्स्यान्नागविद्धाप्रशस्यतइति ॥ सिद्धिविनायकव्रतेऽपिसामध्याह्नव्यापिनीग्राह्या ॥ प्रातश्शुक्लतिलैस्स्नात्वामध्याह्नेपूजयेन्नृपेति ॥ पूजायास्तत्कालत्वात्॥उभयदिनेमध्याह्नव्याप्त्यसत्वेव्याप्तिसत्वेवापूर्वैव॥मातृविद्धाप्रशस्यतइतिवाक्यात्॥इयञ्चरविभौमाभ्यांयुतामहतीत्युच्यते ( तदुक्तंवाराहपुराणे ) भाद्रशुक्लचतुर्थीयाभौमेनार्केणवायुता ॥

महतीसात्रविघ्नेशस्यार्चयेष्टलभेन्नरइति ॥ अस्यांच न्द्रंनपश्येत् ( तदाहमार्कण्डेयः ) भाद्रेमासिसितेपक्षे चतुर्थीस्वातियोगिनी ॥ मिथ्याभिशापंकुरुतेदृष्टचन्द्रो नसंशयः ( पराशरोऽपि ) कन्यादित्येचतुर्थ्यांतुशुक्लेचंद्र स्यदर्शनम्॥मिथ्याभिदूषणंकुर्य्याद्रात्रौपश्येन्नतंसदा॥ अत्ररात्रिग्रहणाद्दिवादर्शनेनदोषइति॥ रात्रावेवचन्द्रप्र धान्यात्॥ तद्दोषशान्त्यर्थेपुराणान्तरम् ॥ ततश्चतुर्थ्यां रात्र्यांयोप्रमादाद्वीदयमानवः॥ पठेत्पौराणिकंवाक्यंप्रा ङ्मुखोवाउदङ्मुखः ॥ सिंहःप्रसेनमवधीत्सिंहोजांबव ताहतः ॥ सुकुमारकमारोदीस्तवह्येषस्यमन्तकइति ॥ वरदचतुर्थीचास्याविवृतंतत्रैव॥ सुरासुरानाप्नुवन्तीग णेशंभक्तिपूर्वकम् ॥ तस्यांप्रादाद्वरंतस्माद्यस्माद्वरद चतुर्थिकेति (माघशुक्लेतिलचतुर्थी ) तदुक्तङ्काशीखण्डे॥ माघशुक्लचतुर्थ्यान्तुनक्तव्रतपरायणः ॥ येत्वांढुंढेऽर्चयि ष्यन्तितेऽर्च्याःस्युरसुरद्रुहाम् ॥ विधायवार्षिकींयात्रा श्चतुर्थीम्प्राप्यतापसीम् ॥ शुक्लाँस्तिलान्गुडैर्बद्ध्वाप्रा श्नीयाँल्लड्डुकान्व्रती (तापसीमाघी) अत्रनक्तग्रहणात्प्र दोषव्यापिनीग्राह्येति (इतिचतुर्थीनिर्णयः ॥ अथपञ्च मीनिर्णयः) साचतुर्थीयुतैवग्राह्या ॥ युगभूतानामिति युग्मवचनात्॥ पञ्चमीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्त्तव्यासम्मुखीतिथिरितिपैठीनसिव चनाच्च ॥ सम्मुखीसायाह्नव्यापिनीब्रह्मवैवर्त्तेऽपि ॥ प्र तिपत्पञ्चमीभूतसावित्रीवटपूर्णिमा ॥ नवमीदशमीचै वनोपोष्याःपरसंयुताइति (माधवीयस्कान्देऽपि) पञ्च

मीचतथाकार्याचतुर्थीसंयुताविभोइति (मत्स्यपुराणे)
ब्रह्मणोयोदिनस्यादिःकल्पादिःसप्रकीर्त्तितः ॥ वैशाख
स्यतृतीयायाकृष्णाफाल्गुनस्यच ॥ पञ्चमीचैत्रमासस्य
तथैवान्त्यातथापरा ॥ शुक्लात्रयोदशीमाघेकार्त्तिकस्यतु
सप्तमी ॥ नवमीमार्गशीर्षस्यसप्तैताःसंस्मराम्यहम् ॥
कल्पानामादयोह्येतादत्तस्याक्षयकारकाः ॥ अत्रैताः
शुक्लाःपौर्वाह्णिक्यः कृष्णाअपराह्णिक्यइतियुगादिव्यव
स्था ॥ शुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविः ॥ कृ
ष्णपक्षेतिथिर्ग्राह्यायस्यामस्तंगतोरविरितिवाक्यात् ॥
अत्रपक्षविशेषानुपादानेशुक्लेज्ञेयाः ॥ श्रावणशुक्लपंचमी
नागपंचमीत्युच्यते ॥ सापराविद्धाग्राह्या ॥ तदुक्तंचम
त्कारचिंतामणौ॥ पंचमीनागपूजायांकार्याषष्ठीसमन्वि
ता ॥ तस्यांतुतुषितानागाइतरासचतुर्थिकेति ॥ प्रता
पमार्त्तण्डेस्मृत्यंतरेऽपि ॥श्रावणेपंचमीशुक्लासाप्रोक्ताना
गपंचमी ॥ तांपरित्यज्यपंचम्यश्चतुर्थीसहिताइताइति
(अत्रकर्त्तव्यमुक्तंकाशीखंडे ) यःस्नातोनागपंचम्यांकुंडे
वासुकिसंज्ञके ॥ नतस्यविषसंसर्गोभवेत्सर्पसमुद्भवः ॥
कर्त्तव्यानागपंचम्यांयात्रावर्षासुतत्रवै ॥ नागाःप्रसन्ना
जायंतेकुलेतस्यापिसर्वदेति (गोविंदार्णवेभविष्येऽपि)
श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप ॥ द्वारस्योभय
तोलेख्यागोमयेनविषोल्वणाः ॥ पूजयेद्विधिवद्वारेदधि
दूर्वांकुरैःकुशैः ॥ गंधपुष्पोपहारैश्चब्राह्मणानांचतर्पणैः॥
येतस्यांपूजयन्तीहनागान्भक्तिपुरःसरम् ॥ नतेषांस
र्पतोवीरभयंभवतिकुत्रचिदिति ॥ भाद्रशुक्लपञ्चमीक्र

षिपञ्चमीत्युच्यते (तदुक्तंब्राह्मे) नभस्यशुक्लपक्षेतुयदा भवतिपञ्चमी ॥ नद्यादिकेतथास्नात्वाकृत्वानियममेवच ॥ ब्राह्मणीक्षत्रियावैश्याशूद्रावापिवरानने ॥ कृत्वानैमित्तिकंकर्म्मगत्वानिजगृहंपुनः ॥ वेदींसम्यक्प्रकुर्व्वीतगोमयेनोपलिप्यताम् ॥ रंगावलिसमायुक्तांनानापुष्पोपशोभिताम् ॥ तत्रसप्तऋषीन्दिव्यान्भक्तियुक्तःप्रपूजयेदिति ॥ तत्रपञ्चमीयुताग्राह्येति ॥ मदनरत्नेयुग्मवाक्यात् ॥ माधवीयेऽप्येवम् ॥ अथाश्विनेशुक्लपञ्चम्यामुपांगललिताव्रतम् ॥ यद्यपिमहानिबन्धेष्वनुक्तम् ॥ तथाप्यतिप्रचारान्निर्णीयते ॥ तत्रपञ्चमीमध्याह्नव्यापिनीग्राह्या ॥ तत्रैवपूजाविधानात् ॥ माधवीयेस्मृत्यंतरेऽपि ॥ पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरिति ॥ मार्गशीर्षशुक्लपञ्चम्यपिनागपञ्चमी ॥ शुक्लेमार्गशिरेपुण्याश्रावणेयाचपञ्चमी ॥ स्नानदानैर्बहुफलानागलोकप्रदायिनीति ( स्कांदेहेमाद्रौ ) इयमपिपरयुतैवग्राह्या॥ पञ्चमीनागपूजायांकार्य्याषष्ठीसमन्वितेति ॥ पूर्वोक्तवचनात् ( इतिपञ्चमीनिर्णयः ॥ अथषष्ठी) सातुसर्वेषूपवासव्रतादिषुस्कन्दव्रतादतिरिक्तासप्तमीयुतैवग्राह्या ॥ षण्मुन्योरितियुग्मवाक्यात् (माधवीयेस्कांदेऽपि) नागविद्धानकर्त्तव्याषष्ठीचैवकदाचन ॥ सप्तमीसंयुताकार्य्याषष्ठीधर्म्मार्थचिन्तकैरिति। अत्रपञ्चमीवेधःषण्मुहूर्त्तात्मकोज्ञेयः ॥ नागोद्वादशनाडीभिर्दूषयत्युत्तरांतिथिमितिवचनात् ॥ तेनषण्मुहूर्त्तन्यूनपञ्चमीयोगपूर्वैव ॥ अस्यामेवरविवासरयोगेल्लोला

र्कयात्रोक्ताकाशीखण्डे ॥ कृतानियानिपापानिनरैःसंव त्सरादपि ॥ नश्यतीक्षणतस्तानिषष्ठ्यर्केलोलदर्शनात् ॥ लोलोलोलार्कः ॥ वार्षिकयात्राप्युक्तातत्रैव ॥ मार्गशीर्ष स्यसप्तम्यांषष्ठ्यांवारविवासरे ॥ विधायवार्षिकींयात्रां नरःपापात्प्रमुच्यतेइति ॥ आषाढशुक्लषष्ठीस्कंदषष्ठीत्यु च्यतेसापंचमीयुतैवग्राह्या ॥ तदुक्तंस्कांदे ॥ कृष्णाष्टमी स्कन्दषष्ठीशिवरात्रिश्चतुर्द्दशी ॥ एताःपूर्वयुताकार्यास्ति थ्यन्तेपारणंभवेदिति ॥ भाद्रकृष्णषष्ठीयोगविशेषेणकपि लाषष्ठीत्युच्यते ( तदुक्तंपुराणसमुच्चये ) भाद्रमास्यसि तेपक्षेभानौचैवकरेस्थिते ॥ पातेकुजेचरोहिण्यांसाषष्ठी कपिलाभवेत् ॥ संयोगेतुचतुर्णांतुनिर्दिष्टापरमेष्ठिनेति ॥ ( वाराहपुराणेऽपि ) नभस्यकृष्णपक्षेतुरोहिणीभूसुरोत्त मैः ॥ युक्ताषष्ठीपुराणज्ञैःकपिलापरिकीर्त्तिता ॥ व्रतेहेमा द्रौविशेषः ॥ द्वितीयातुमहापुण्यादुर्लभाव्रतिनांक्वचित् ॥ षष्ठीसंवत्सरस्यांतेसापुनस्तेनसंयुतेति ( मार्गशुक्लेया षष्ठी ) तस्यांखंडेरावाख्यमल्लारिपूजाब्राह्मणभोजना दिमल्लारिमाहात्म्येदाक्षिणात्येषुप्रसिद्धम् ॥ अस्यां योगविशेषस्तत्रैवोक्तः ॥ मार्गेभाद्रपदेशुक्लाषष्ठीवैधृति संयुता ॥ रविवारेणसंयुक्तासाचंपेतीहकीर्त्तितेति ( तथा ) मार्गशीर्षेऽमलेपक्षेषष्ठ्यांवारेंऽशुमालिनः ॥ शततारा गतेचंद्रेलिंगस्याद्दृष्टिगोचरमिति ॥ इयंचयोगविशेषे णपूर्वापरावाग्राह्या ॥ तदभावेसप्तमीयुक्ताकार्यापूर्वोक्त सामान्यनिर्णयादितिदिक् ( इतिषष्ठीनिर्णयः ॥ अथ सप्तमी ) सासर्वत्रपूर्वैव ॥ परमुन्योरितियुग्मवचनात् ॥

(स्कांदेऽपि) षष्ठ्यायुतासप्तमीचकर्त्तव्यातातसर्वदेति ॥ वैशाखशुक्लसप्तम्यांगङ्गापूजोक्ताब्राह्मे ॥ वैशाखेशुक्लस प्तम्यांजह्नुनाजाह्नवीस्वयम् ॥ क्रोधात्पीत्वापुनस्त्यक्त्वा कर्णरंध्रात्तुदक्षिणात् ॥ तांतत्रपूजयेद्देवींगङ्गागगनमेख लामिति ॥ अत्रपूर्वाह्णव्यापिनीग्राह्या ॥ दिनद्वयसा म्येनपूर्वाह्णगामिनीपूर्वासामान्यनिर्णयात् ॥ आश्विन शुक्लसप्तमीदेवीपूजायांपरयुताग्राह्या ॥ युगाद्यावर्ष वृद्धिश्चसप्तमीपार्वतीप्रिया ॥ रवेरुदयमीक्षन्तेनतासु तिथियुग्मतेति (प्रतापमार्त्तण्डेभविष्योक्तेः) वर्षवृद्धि र्जन्मतिथिः ॥ अत्रैवमूलनक्षत्रेपुस्तकस्थापनमुक्तंरुद्र यामले ॥ मूलऋक्षेसुराधीशपूजनीयासरस्वती ॥ पू जयेत्प्रत्यहंदेवयावद्वैष्णवमृक्षकम् ॥ नाध्यापयेन्नच लिखेन्नाधीयीतकदाचन ॥ पुस्तकेस्थापितेदेविविद्याका मोद्विजोत्तमः (संग्रहेऽपि) आश्विनस्यासितेपक्षेमेधाका मःसरस्वतीम् ॥ मूलेनावाहयेद्देवींश्रवणेनविसर्ज्जयेत् ॥ माघशुक्लसप्तमीरथसप्तमीत्युच्यते ॥ साअरुणोदय व्यापिनीस्नानादौग्राह्या ॥ सूर्यग्रहेणतुल्यास्याच्छुक्ला माघस्यसप्तमी ॥ अरुणोदयवेलायांतस्यांस्नानेमहाफल मिति (चंद्रिकायांविष्णूक्तेः) अरुणोदयवेलायांशुक्लेमा घस्यसप्तमी ॥ प्रयागेयदिलभ्येत कोटिसूर्यग्रहैःसमे ति ॥ स्मृत्यंतराच्च ॥ दिनद्वयेऽरुणोदयेचेत्पूर्वैव ॥ षण्मु न्योरितियुग्मवाक्यात् (अत्रकृत्यंभविष्ये) कृत्वाषष्ठ्या मेकभक्तंसप्तम्यांनिश्चलव्रती ॥ रात्र्यंतेचालयेत्सम्यग्द त्वाशिरसिदीपकम् ॥ सौवर्णेराजतेताम्रेभक्त्यालाबु

मयेतथा॥ तैलेनवर्त्तिर्दातव्यामहारंजनरंजिता॥ समाहितमनाभूत्वादत्वाशिरसिदीपकम् ॥ भास्करंहृदये ध्यात्वाइमंमंत्रमुदीरयेत् ॥ नमस्तेरुद्ररूपायरसानांपतयेनमः॥ वरुणायनमस्तेऽस्तुहरिवासनमोऽस्तुते॥ जले परिहरेद्दीपंध्यात्वासंतर्प्यदेवताइति ॥ महारजनंकुसुमं परिहरेन्मुंचेत् (काशीखंडेविशेषः) लोलार्केरथसप्तम्यां स्नात्वागंगाऽसिसंगमे ॥ सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणात् ॥ इयंचषष्ठीरविवासरयोगेऽतिफलप्रदा॥ षष्ठीचसप्तमीयोगेवारश्चेदंशुमालिनः॥ योगोऽयंपद्मकोनामसहस्रार्कग्रहैःसमइतिस्मृतिचंद्रोदयेगर्गोक्तेः (अर्घमंत्रश्चकाशीखंडे) यदाजन्मकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकञ्चमाकरीहंतुसप्तमीति (इतिसप्तमीनिर्णयः ॥ अथाष्टमी ) कृष्णापूर्वाशुक्लापराग्राह्या ॥ शुक्लपक्षेऽष्टमीचैवशुक्लपक्षेचतुर्दशी॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुतेति ॥ कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धैवकर्त्तव्यापरविद्धानकुत्रचित्॥ उपवासेषुराजेन्द्रएषधर्म्मःसनातनइतिनिगमात् ( सर्व्वास्वष्टमीषुभैरवयात्राकाशीखण्डे ) अष्टम्यांचचतुर्द्दश्यांभौमवारेविशेषतः ॥ सम्पूज्यसततं काश्यांदुर्गांदुर्गतिनाशिनीमिति ॥ चैत्रशुक्लाष्टम्यांविशेषतस्तत्रैव॥ चैत्राष्टम्यांमहायात्रांभवान्याःकारयेत्सुधीः ॥ अष्टाधिकाःप्रकर्त्तव्याःसत्रिःकृत्वाप्रदक्षिणाइति ॥ इयंचपरयुताग्राह्यायुग्मवचनात् ॥ श्रावणकृष्णाष्टमीद्विधा ॥ जन्माष्टमीजयन्तीच ॥ तत्रकेवला

जन्माष्टमी॥ रोहिणीयुताजयन्ती॥ तत्राद्योक्तास्कांदे॥ अष्टमीश्रावणेमासिकृष्णपक्षेसदाभवेत्॥ कृष्णजन्माष्टमीज्ञेयामहापातकनाशिनीति (पुराणांतरेऽपि) श्रावणे बहुलेपक्षेकृष्णजन्माष्टमीव्रती॥ रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतामिति (जयन्तीतूक्तावह्निपुराणे) कृष्णाष्टम्यांभवेद्यत्रकलैकारोहिणीयदि॥ जयन्तीनामसाप्रोक्ता उपोष्यासाप्रयत्नतइति (स्कांदेऽपि) प्राजापत्येनसंयुक्ता अष्टमीतुयदाभवेत्॥ श्रावणेबहुलेसातुसर्वपापप्रणाशिनी॥ जयंपुण्यंचकुरुतेजयंतींतांविदुर्बुधाइति (शैवपुराणेशिववाक्यम्) शृणुवत्सप्रवक्ष्यामिअष्टमीभेदनिर्णयम्॥ श्रावणेकृष्णपक्षस्यघटषष्ठीयदाभवेत्॥ तदाजन्माष्टमीख्यातासंपूर्णासाप्रकीर्त्तिता॥ रोहिणीऋक्षसंयुक्ताजयंतीसातुकथ्यते॥जयंतीयदिलभ्येततत्रपुण्यंनगण्यतइति(पाद्मे)प्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः॥ यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता॥ किंपुनर्बुधवारेणसोमेनापिविशेषतः॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेति॥ सोमवारइतिकेचित्॥ युक्तंतुचंद्रोदयइति॥ अर्द्धरात्रेतुयोगोऽयंतारापत्युदयेसतीति॥ विष्णुधर्मोत्तरेमूलकल्पनालाघवात्॥ अत्रजन्माष्टमी नित्या॥ येनकुर्वंतिजानंतःकृष्णजन्माष्टमीव्रतम्॥ तेभवंतिनराःप्राज्ञव्यालव्याघ्राश्चकाननेइति॥ स्कांदेऽकरणेऽनिष्टश्रुतेः॥ श्रावणेबहुलेपक्षेकृष्णजन्माष्टमीव्रतम्॥ नकरोतिमहाप्राज्ञव्यालोभवतिकाननइतिचभविष्ये॥ जयंत्यपिनित्याकाम्याच (नित्योक्तास्कांदे)

शूद्रान्नेनतुयत्पापंशवहस्तस्यभोजने ॥ तत्पापंलभतेकुं तिजयंतीविमुखोनरः ॥ नकरोतियदाविष्णोर्जयंतीसं भवंव्रती ॥ यमस्यवशमापन्नस्सहतेनारकींव्यथामिति॥ अकरणेप्रत्यवायश्रवणात् ॥ काम्यताप्युक्तास्कांदे ॥महाज यार्थंकुरुतांजयंतींमुक्तयेऽथवा ॥ धर्ममर्थंचकामंचमोक्षं चमुनिपुंगव ॥ ददातिवांछितानर्थान्येचाप्यत्यंतदुर्ल भाइति ॥ फलविशेषश्रवणात् ॥ अस्मिंश्चव्रतेउपवासः ॥ पूजाचेत्युभयंप्रधानम् ॥ जन्माष्टमीव्रतेप्राप्तेयेनभुक्तं द्विजोत्तम ॥ त्रैलोक्यसंभवंपापंतेनभुक्तंनसंशयइति स्कांदात् ॥ अर्द्धरात्रेतुरोहिण्यांयदाकृष्णाष्टमीभवेत् ॥ तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजम् ॥ सोपवासो हरेःपूजांकृत्वातत्रनसीदतीति ॥ भविष्यपुराणाच्च ॥ फलसम्बन्धावगमादितिनव्याः (तन्न) चित्रोद्भिद्वन्नि रपेक्षफलसंबंधात्प्रयोगभेदापत्तेः ॥ ननुपूर्वोदाहृत वाक्येषुगौरवपरिजिहीर्षयाकेवलंफलसंबंधएवाक्रियते॥ श्रावणेबहुलेपक्षेकृष्णजन्माष्टमीव्रतम् ॥ नकरोतिन रोयस्तुभवतिक्रूरराक्षसइत्यादिषु कालविधायकेषुभ विष्यपुराणादिवचनेषुकृष्णजन्माष्टमीव्रतशब्देनोभयो रुपादानात् ॥ दर्शपूर्णमासराजसूयादिवत्प्रयोगैक्य मितिचेन्न ॥ प्रातिस्विकवाक्यैःपृथक्फलसंबंधउद्भि च्चित्रादिवत्परस्परनैरपेक्ष्येणेति कर्त्तव्यतायाअप्यन्वया त्भिन्नएवप्रयोगविधिःकल्पेन ॥ एवंचैकशब्दोपादान मपियष्टव्यापशुनासोमेनेत्यादिवन्नविरुद्ध्यते ॥ अस्तु पृथक्प्रयोगतेतिचेन्न ॥ अनन्तरस्वकृतव्रतानुष्ठानपद्ध

तौएकप्रयोगलेखनविरोधात् ॥ तस्मात्सोपवासोहरेः पूजामित्यनंतरोपन्यस्ते ॥ मासिभाद्रपदेऽष्टम्यांकृष्णपक्षेऽर्द्धरात्रके ॥ शशांकेवृषराशिस्थेऋक्षेरोहिणिसंज्ञके ॥ योगेऽस्मिन्वसुदेवाद्धिदेवकीमामजीजनत् ॥ तस्मान्मांपूजयेत्तत्रशुचिःसम्यगुपोषित इत्यादावुपवासस्यगणत्वप्रतीतेः ॥ सदतोधावतीत्यादिवत्फलंसंस्कारःपूजैवप्रधानम् ॥ एवंचोपवासस्यपारार्थेनिर्ज्ञातेयस्तद्वाक्येफलोल्लेखः सकेवलस्तावकएवपर्णतादिवअंगेफलश्रुतिरर्थवादइतिन्यायात् ॥ ननुवासुदेवसमुद्दिश्यसर्वपापप्रशान्तये ॥ उपवासंकरिष्यामिकृष्णाष्टम्यांनमाम्यहम् ॥ अथकृष्णाष्टमींदेवींनभश्चन्द्रसरोहिणीम् ॥ अर्चयित्वोपवासेनभोक्ष्येऽहमपरेऽहनीति ॥ भविष्यदुक्तेसङ्कल्पवाक्येउपवासस्यप्रकाशत्वेनोल्लेखात्सोऽपिप्रधानमितिचेन्न ॥ अंगत्वेप्युपवासस्यक्रियासंबन्धनंवाप्रकाशयन्मन्त्रः ॥ करणत्वंभजतइतिन्यायात् ॥ क्रियासम्बन्ध्युपवासप्रकाशत्वेनापिमन्त्रस्यकरणोपपत्तेः॥उपवासेनेत्युपलक्षणेतृतीया॥ उपवासस्यपूजाकरणत्वासम्भवात् ॥ ननुपूर्वोदाहृतयोः पूजाफलसम्बन्धबोधकवाक्ययोरकरणानिन्दार्थवादादेरभावात् कथंव्रतस्यनित्यत्वोद्घोषइतिचेन्न ॥ उक्तयुक्त्यापूजायाएवफलसम्बन्धेपूर्वोदाहृतेषुश्रावणेवहुलेपक्षेइत्यादिवाक्येषुकृष्णजन्माष्टमीव्रतशब्देनपूजायाग्रहणात्॥ युक्तोकरणानिन्दार्थवादश्रवणान्नित्यत्वोद्घोषइति ॥ तस्मादुपवासोंगंपूजैवतुप्रधानम् (अ

स्याश्चपूजायाःकालउक्तोविष्णुधर्म्मोत्तरे) रोहिणीस हिताकृष्णमासिभाद्रपदेऽष्टमी ॥ सप्तम्यामर्द्धरात्रे याकलयापियदाभवेत् ॥ तत्रजातोजगन्नाथःकौस्तुभी हरिरीश्वरः ॥ तमेवोपवसेत्कालंतत्रकुर्य्याच्चजागरम् ॥ अर्द्धरात्रेतुयोगोऽयंतारापत्युदयेतथा॥ नियतात्माशुचि स्स्नातःपूजांतत्रप्रवर्त्तयेदिति (वशिष्ठस्तुस्पष्टमर्द्धरात्र स्यमुख्यकालत्वमाह ) अष्टमीरोहिणीयुक्तानिश्यर्द्धे दृश्यतेयदि ॥ मुख्यकालःसविज्ञेयस्तत्रजातोहरिस्स्व यमिति ॥ मुख्यस्यप्रधानकालोमुख्यकालः ॥ अत्र केवलाष्टमीचतुर्द्धा ॥ पूर्वेद्युरेवनिशीथव्यापिनीपरेद्यु रेवोभयेद्युर्नोभयेद्युश्चेति ॥ तत्रप्रथमद्वितीयपक्षयोः कर्मकालव्यापित्वेनासंदिग्धैव ॥ अन्त्यतयोरपिपक्षयोः प्रातस्सङ्कल्पकालेसत्वादाधिक्याच्चपरैव(ब्रह्मवैवर्त्तेऽपि) वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमीति ॥ रोहिणीयुता पिचतुर्द्धा ॥ पूर्वेद्युरेवनिशीथयोगवतीपरेद्युरेवतादृशी उभयेद्युर्नोभयेद्युश्चेति ॥ तत्रपूर्वेद्युर्निशीथयुतापूर्वैवका र्य्याविद्धापिसप्तम्यांरोहिण्यासहिताष्टमीतिपाद्मात् ॥ सप्तमीसंयुताष्टम्यांनिशीथेरोहिणीयदि ॥ भवितासा ष्टमीपुण्यायावच्चन्द्रदिवाकरावितिवह्निपुराणात् ॥ ज यन्त्यांपूर्वविद्धायामुपवासंचरेदितिगारुडाच्च (भविष्ये विष्णुधर्मोत्तरे ) रोहिण्यामर्द्धरात्रेचयदाकृष्णाष्टमी भवेत् ॥ तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजम् ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ सोपवासो हरेःपूजांकृत्वातत्रनसीदति ॥ अर्द्धरात्रेतुयोगोऽयंता

रापत्युदयेतथा ॥ रोहिणीसहिताकृष्णामासिभाद्रप देऽष्टमी ॥ अर्द्धरात्रादधश्चोर्द्धकलयापियदाभवेत् ॥ तत्रजातोजगन्नाथःकौस्तुभीहरिरीश्वरः (तथा) समायोगेतुरोहिण्यांनिशीथेराजसत्तम ॥ समजायतगोविन्दोबालरूपीचतुर्भुजः ॥ तस्मात्तंपूजयेत्तत्रनिशीथेराजसत्तमेति ॥ अवशिष्टेषुत्रिषुपक्षेषुपरादिनएवव्रतम् ॥ (तदुक्तंब्रह्मवैवर्त्ते) वर्ज्जनीयाप्रयत्नेनसप्तमीसहिताष्टमी ॥ सऋक्षापिनकर्त्तव्यासप्तमीसंयुताष्टमीति (स्कांदे) सप्तमीसहिताष्टम्यांभूत्वाऋक्षंद्विजोत्तम ॥ प्राजापत्यंद्वितीयेह्निमुहूर्त्तार्द्धंभवेद्यदि ॥ तदाष्टयामिकंज्ञेयं प्रोक्तंव्यासादिभिःपुरा (पाद्मे) मुहूर्त्तेनापिसंयुक्तासम्पूर्णासाष्टमीभवेत् ॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेति ॥ यदातुपूर्वेद्युरोहिणीरहितानिशीथगाचतिथिः परेद्युश्चरोहिणीसहितानिशीथास्पृक्चतथापूर्वैवग्राह्या ॥ कर्मकालशास्त्रस्यसर्वापेक्षयाप्राबल्यस्यसर्वग्रन्थसिद्धत्वात् ॥ रोहिणीयोगेतुप्राशस्त्यात्फलातिशयमात्रंनतुतस्यनिर्णयोपयोगिता ॥ नवमीबुधवारवत् ॥ अन्यथाप्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः ॥ यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता ॥ किंपुनर्बुधवारेणसोमेनापिविशेषतः ॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेति ॥ पाद्मवचसापूर्वेद्युरर्द्धरात्रेएववर्त्तमानांरोहिणीमथाष्टमींत्यक्त्वा बुधनवमीयुतापरैवकार्य्योपाद्येत ॥ यत्तुपुनर्नव्याः ॥ सत्यंकर्मकालशास्त्रंसर्वापेक्षयाप्रबलंतथापियस्मिनूव्रते परैवग्राह्येत्येवंविधेनप्रातिस्वि

केनशास्त्रेणबाध्यते ( अतएवविष्णुरहस्ये ) प्राजापत्य र्द्दसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्त्तमपिलभ्येतसै वोपोष्यामहाफलेति (वह्निपुराणेऽपि) कृष्णाष्टम्यां भवेद्यत्रकलैकारोहिणीयदि ॥ जयन्तीनामसाप्रोक्ता उपोष्यैवप्रयत्नतः ( स्कांदे ) उदयेचाष्टमीकिंचिन्नव मीसकलायदि ॥ भवेत्तुबुधसंयुक्ताप्राजापत्यर्द्दसंयु ता ॥ अपिवर्षशतेनापिलभ्यतेयदिवानवेति (ब्रह्मवैव र्त्ते) दिवावायदिवारात्रौनव्यवस्थापितंभवेदित्याहुः ॥ तदपिन ॥ तदेवहिप्रातिस्विकंशास्त्रंकर्म्मकालबाधकंय दनन्यथासिद्धंभवति ॥ सम्भवतित्वस्यन्याप्योऽन्योऽ र्थः ( तथाहि ) यत्तावद्ब्रह्मवैवर्त्तीयंतत्रेन्दुसंयुतामित्य स्यसोमेनापिविशेषत इत्यनेनैकमूलकल्पनालाघवलि प्सयासोमवारपरत्वान्नास्यादिवावच्छेदेन रात्र्यवच्छेदे नवारोहिणीकलायोगाभावेनिशीथगाग्राह्येत्ययमर्थः ॥ निशीथगमकशब्दाभावात् ॥ किन्तुसोमवारयुक्तावि शेषेणाधिक्येनरात्रियुक्ताग्राह्येति ॥ एवंचोभयदिने निशीथस्पर्शाभावेसोमवाराधिकरात्रिव्याप्तौ निर्णयक त्वमुक्तंभवति ॥ यद्वा ॥ इन्दुसंयुतस्यनिशीथपरत्वेऽ पिरात्रिपदेनैवाधिकांरात्रींलक्षयित्वाहोरात्रावच्छेदेनक लयापिरोहिणीयोगाभावेऽधिकरात्रिव्यापिनींकुर्वीतेत्यु क्ताविशेषेणेत्यादिनातदपोद्यते ॥ सत्यपिरोहिणीयो गइन्दुसंयुतैवग्राह्येति ॥ अथवानिशीथस्यमुहूर्त्तमात्रा त्मकत्वादुभयदिने वैषम्येणनिशीथस्पर्शेऽहोरात्रेरोहि णीयोगाभावेच विशेषेणाधिक्येनेन्दुसंयुक्तानिशीथगा

ग्राह्या ॥ अधिकानिशीथव्यापिनीतिथावत् ॥ रोहिणी योगेत्वधिकनिशीथव्यापिनीमपिविहायस्वल्पनिशीथ योगिनीरोहिणीयुक्तामेवकुर्वीतेति ॥ यत्तुस्कांदंउदये चाऽष्टमीकिञ्चिदिति ॥ तत्राप्युदयशब्दस्यतारापत्युद ये सतीत्याद्येकमूलकल्पनालाघवलिप्सयाचन्द्रोदयपर तैवांगीकार्या ॥ नसूर्योदयपरतायदित्वेवंनव्याख्याय ते ततोयथाश्रुतवाक्यबलाद्यदापूर्वेद्युर्निशीथेऽष्टमीमा त्रसत्वमुत्तरेद्युश्च निशीथास्पर्शिन्यष्टमीरोहिणीयुक्ता चसतीयदाबुधयुक्तातदैवोत्तरास्यान्नतुतदभावे॥ याव द्वनंवाचनिकमितिन्यायात् ॥ यदितुबुधाभावेऽपिरोहि णीमात्रवशादेवोत्तरोच्यतेतदारोहिणीयोगाभावेपिबुध मात्रसद्भावादुत्तरास्यात् ॥ अन्यतरापायेप्येतद्वचनप्रवृ त्तेःस्वीकारात् ॥ ऋक्षयोगवद्वारयोगस्यापिप्राशस्त्यहे तुत्वाच्च ॥ अतोऽर्द्धजरतीयापत्तिः ॥ किञ्च ॥ यथापूर्वेद्यु र्निशीथेऽष्टमीमात्रसत्वे उत्तरेद्युश्चनिशीथात्पूर्वमृक्षयो गेबुधसत्वेचैवतद्वचनादुत्तरेद्युर्व्रतम् ॥ एवंपूर्वेद्युर्नि शीथे सर्क्षाष्टमीसत्वेप्युत्तरेद्युर्बुधाधिक्यादुत्तरेद्युर्व्रताप त्तिः ॥ प्रपंचिताचैतद्वचोव्याख्याद्वैतनिर्णयेगुरुभिः ॥ यच्चविष्णुरहस्यस्थं यदपिवह्निपुराणस्थंतत्रमुहूर्त्तपदम् निशीथाख्यमुहूर्त्तपरंकलापदंतद्वर्त्तिकलापरमितिन वि रोधः ॥ वस्तुतस्तुयद्वाक्यद्वयमुभयदिनेनिशीथेऽष्टमी व्याप्तावव्याप्तावेकदेशव्याप्तौवासावकाशमतोनकर्म्म कालव्याप्तिबाधकम् ॥ तस्मात्कर्म्मकालशास्त्राबाधा त्पूर्वैवग्राह्या ॥ यदितुजयन्तीव्रतंजन्माष्टमीव्रतादिभि

न्नंतदानद्भवतुपरेऽहनिनतुजन्माष्टमीव्रतम् ॥ यत्तुमा
धवाचार्य्यैर्जयन्तीव्रतेनजन्माष्टमीव्रतस्यप्रसङ्गसिद्धिर
भ्यधायितन्न ॥ कालभेदात् ॥ योऽपिचतैरेवनामभे
दान्निमित्तभेदाद्रूपभेदाच्छुद्धमिश्रत्वभेद निर्देशभेदाद्य
कर्मभेदउक्तःसोऽपिन ॥ कर्म्मनामधेयभेदेहिस्यात्कर्म्म
भेदः ॥ नह्यत्रजयन्तीशब्दःकर्म्मणाम् ॥ किन्तुरोहि
णीसहितायाअष्टम्या ॥ रोहिणीचयदाकृष्णपक्षेऽष्ट
म्यांद्विजोत्तम ॥ जयन्तीनामसाप्रोक्तासर्वपापहराति
थिरितिविष्णुधर्मोत्तरात् ॥ यदपिरूपभेदादित्युक्तंतत्र
रूपशब्देनधात्वर्थभेदोवाभिप्रेतः ( नाद्यः ) कर्म्मभेद
साधकतयाऽभिक्षाधिकरणोपन्यासासङ्गतेः ॥ नह्यभि
क्षाधिकरणेधात्वर्थभेदाद्भेदःसिद्ध्यति ॥ ( नान्त्यः )
उत्पत्तिशिष्टस्यवाधिक्यांतरेश्रवणात् ॥ निमित्तभेदशु
द्धमिश्रत्वभेदनिर्देशभेदानांतुकर्म्मभेदकत्वंनक्वापिव्यु
त्पादितम् ॥ ननुजन्माष्टमीजयन्तीचाशिवरात्रिस्तथै
वच ॥ पूर्वबिद्धैवकर्त्तव्यातिथिभांतेचपारणामितिभृगु
वाक्येऽनन्यपरंपुनः श्रवणलक्षणादभ्यासादेवभेदइति
चेन्न ॥ एतस्यवचसोजन्माष्टमीमत्स्यादिजयंत्यानु
वादेनपूर्वबिद्धत्वगुणमात्रबिद्धापकत्वेनाप्युपपत्तेः ॥
अथपूर्वोदाहृतेपुत्राक्येपूपवसेत्पूजयेच्चेत्यपर्य्यायधातुनि
ष्पन्नाख्यातरूपाच्छब्दांतराभेदइष्यते तत्रशब्दांतरे
णोपवासपूजयोर्भेदेप्युपवासस्य पूजांगत्वस्य प्राक्स्था
पितत्वेननस्वातंत्रेणकालनिर्णयप्रयोजकत्वम् ॥ प्र
करणांतराद्भेदइतिचेन्न ॥ उपलभ्यमानस्मृतिपुरा

णादिषुअसांनिध्यनुपलंभात् ॥ यदिस्यात्तदाकिमिती
संराजमार्गंविहायशुद्धमिश्रत्वादिकुमार्गोमाधवाचार्य्यै
राश्रीयेत ॥ एवमपिस्वमात्रसाक्षिकत्वेनप्रकरणान्त
राद्गेदेसमाश्रियमाणेभवतुजयंतीव्रतंपरेहनि ॥ जन्मा
ष्टमीव्रतेतुसत्यप्युत्तरदिने निशीथाव्यापिन्याअष्टम्या
रोहिणीयोगेपूर्वदिनेचकेवलयानिशीथयोगेपूर्वैवग्राह्येति
दिक् ( अथजन्माष्टमीव्रतप्रयोगः ) व्रतपूर्वदिनेदन्त
धावनंकृत्वोपवासदिनेप्रातः ॥ सूर्यःसोमोयमःकाल
स्संध्येभूतान्यहःक्षपा ॥ पवनोदिक्पतिर्भूमिराकाशं
खचरानराः ॥ ब्राह्मंशासनमास्थायकल्पध्वमिहसंनिधि
मित्युक्त्वासफलपुष्पाक्षतंजलपूर्णं ताम्रपात्रमादायमा
साद्युल्लिख्यामुकफलकामः पापक्षयकामोवाकृष्णप्री
तयेकृष्णजन्माष्टमीव्रतंकरिष्ये ( तथा ) वासुदेवंसमु
द्दिश्यसर्वपापप्रशान्तये ॥ उपवासंकरिष्यामिकृष्णा
ष्टम्यांनभस्यहम् ॥ अद्यकृष्णाष्टमींदेवींनभश्चंद्रस
रोहिणीम् ॥ अर्चयित्वोपवासेनभोक्ष्येऽहमपरेऽहनि ॥
एनसोमोक्षकामोऽस्मियद्गगोविंदसञ्चितम् ॥ तन्मे
मुंचतुमांत्राहिपतितंशोकसागरे ॥ आजन्ममरणंयाव
द्यन्मयादुष्कृतंकृतम् ॥ तत्प्रणाशयगोविंदप्रसीदपु
रुषोत्तमेत्युक्त्वापात्रस्थंजलंक्षिपेत् ॥ ततःकदलीस्तंभ
वासोभिराम्रपल्लवयुतसजलपूर्णकलशैर्दीपैः पुष्पमा
लाभिर्युतमगुरुधूपितं अग्निखड्गकृष्णछागरक्षामणि
द्वारन्यस्तमुसलादियुतं मङ्गलोपेतंषष्ठयादेव्याधिष्ठितंदे
वक्याःसूतिकागृहं विधायतस्यसमंताद्भित्तिषुसकुंकुमां

जलीन्देवगन्धर्वादीन्खड्गचर्मधरवसुदेवदेवकीनंदयशोदागर्गगोपान् कंसनियुक्तान्गोधेनुकुंजरान्यमुनातटमध्येकालीयंअन्यच्चतत्कालीनं गोकुलचरितंयथासंभवंलिखित्वासूतिकागृहमध्ये प्रच्छदकपटावृतं मंचकंस्थापयित्वामध्याह्नेनद्याजले तिलैःस्नात्वाऽर्द्धरात्रेसपरिवारः श्रीकृष्णपूजांकरिष्यइतिसंकल्प्य ॥ कांचनीराजतीताम्री पैत्तलीमृण्मयीतथा ॥ वार्क्षीमणिमयीचैववर्णकैर्लिखिताऽथवेत्युक्तान्यतमेनप्रतिमांविधायअग्न्युत्तारणंकृत्वाप्रतिमाकपोलौस्पृष्ट्वा तत्तदेवतानांमूलमंत्रंप्रणवादिचतुर्थ्यंतं नामवाअस्मैदेवत्वसंख्यायैस्वाहेतिमंत्रंपठन्प्राणप्रतिष्ठांकुर्यात् ॥ अस्माइत्यस्यस्थानेतत्तदेवतानामग्राह्यम् ॥ गायद्भिःकिन्नराद्यैःसततपरिवृतावेणुवीणानिनादैः शृंगारादर्शकुन्तप्रवरकृतकरैःकिन्नरैस्सेव्यमाना ॥ पर्यंकेस्वास्तृतेयामुदिततरसुखीपुत्रिणीसम्यगास्ते सादेवीदेवमाताजयतिसुवदनादेवकीदिव्यरूपाइतिदेवकीम् ॥ मांचापिबालकंसुप्तंपर्यंकेस्तनपायिनम् ॥ श्रीवत्सवक्षसंशान्तंनीलोत्पलदलच्छविमितिश्रीकृष्णंचध्यात्वा। ॐनमोदेव्यैश्रियेइतिश्रियम् ॥ देवकीसहितंवसुदेवम्॥ यशोदासहितंनन्दम् ॥ श्रीकृष्णसहितंबलदेवंचंडिकांच ॥ नऽमोंऽतैर्नाममंत्रैःपूजयेत् (तत्रमंत्राः) योगेश्वरायदेवाययोगानांपतयेविभो ॥ योगोद्भवायनित्यायगोविंदायनमोनमः (स्नाने) यज्ञेश्वरायदेवायतथायज्ञोद्भवायच ॥ यज्ञानांपतयेनाथगोविंदायनमोनमः (धूपादौ) विश्वेश्वरा

यदेवायतथाविश्वोद्भवायच ॥ विश्वस्यपतयेतुभ्यंगो
विंदायनमोनमः ( नैवेद्ये ॥ गारुडे ) यज्ञाययज्ञेश्वराय
यज्ञपतयेयज्ञसंभवायगोविंदायनमोनमइत्यार्घेसर्वेषांय
ज्ञपदानांस्थानेयोगपदान्युक्त्वायमेवमंत्रः॥स्नानेविश्वा
याविश्वेश्वरायेत्याद्युक्तन्नैवेद्ये ॥ धर्मादैघधर्मेश्वरायेत्या
दिस्वाहांतस्तिलहोमे विश्वायविश्वेश्वरायेत्यादिशयने
सोमायसोमेश्वरायेत्यादिश्चन्द्रपूजायामितिमंत्राउक्ताः
ततोगव्यघृतेनाग्नौवसोर्द्धाराःक्वचिद्गुडघृतेनेति ॥ त
तोजातकर्मनालच्छेदषष्ठीपूजानामकर्माणिसंक्षेपेणका
र्याणि ॥ ततश्चन्द्रोदयेरोहिणीयुतश्चन्द्रस्थण्डिलेप्रति
मायांवानाममंत्रेणसम्पूज्य ॥ शङ्खेतोयंसमादायसपु
ष्पकुशचन्दनम् ॥ जानुभ्यान्धरणीङ्गत्वाचन्द्रायार्घन्नि
वेदयेत् ॥ क्षीरोदार्णवसम्भूतअत्रिनेत्रसमुद्भव ॥ गृ
हाणार्घ्यंशशाङ्केमंरोहिण्यासहितोममेति ॥ ततोज्यो
त्स्नायाःपतयेतुभ्यंज्योतिषाम्पतयेनमः ॥ नमस्तेरोहि
णीकान्तसुधावासनमोऽस्तुते ॥ नमोमण्डलदीपायशि
रोरत्नायधूर्जटेः ॥ कलाभिर्वर्द्धमानायनमश्चन्द्रायचा
रवेइतिप्रणमेत् ॥ ततः ॥ अनघंवामनंशौरिंवैकुण्ठपु
रुषोत्तमम् ॥ वासुदेवंहृषीकेशंमाधवंमधुसूदनम् ॥
वाराहंपुण्डरीकाक्षंनृसिंहन्दैत्यसूदनम् ॥ दामोदरंप
द्मनाभङ्केशवङ्गरुडध्वजम् ॥ गोविन्दमच्युतंकृष्णमन
न्तमपराजितम् ॥ अधोक्षजञ्जगद्बीजंसर्गस्थित्यन्तका
रिणम् ॥ अनादिनिधनंविष्णुंत्रिलोकेशंत्रिविक्रमम् ॥
नारायणञ्चतुर्बाहुंशङ्खचक्रगदाधरम् ॥ पीताम्बरधर

न्नित्यंवनमालाविभूषितम् ॥ श्रीवत्साङ्कञ्जगत्सेतुंश्री
कृष्णंश्रीधरंहरिम् ॥ शरणन्तुप्रपद्येऽहंसर्वकामार्थसि
द्धये ॥ प्रणमामिसदादेवंवासुदेवजगत्पतिमितिमंत्रैः
प्रणम्य ॥ त्राहिमांसर्वलोकेशहरेसंसारसागरात् ॥ त्रा
हिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो॥ सर्वलोकेश्वरत्रा
हिपतितंमाम्भवार्णवे ॥ देवकीनन्दनश्रीशहरेसंसार
सागरात् ॥ त्राहिमांसर्वदुःखघ्नरोगशोकार्णवाद्धरे ॥
दुर्गतांस्त्रायसेविष्णोयेस्मरन्त्यसकृज्जनाः ॥ सोऽहंदे
वातिदुर्वृत्तस्त्राहिमांशोकसागरात् ॥ पुष्कराच्चनिमग्नो
ऽहंमायाविज्ञानसागरे ॥ त्राहिमांदेवदेवेशत्वत्तोनान्यो
ऽस्तिरक्षिता ॥ यद्बाल्येयच्चकौमारेयौवनेयच्चवार्द्धिके ॥
तत्पुण्यंवृद्धिमाप्नोतिपापंहरहलायुधेतिमंत्रैःप्रार्थयेत् ॥
ततःस्तोत्रंपठन्पुराणश्रवणादिना जागरणंकृत्वाद्वितीयेऽह्निप्रातःकालीनान्नित्यंकृत्वापूर्वन्देवम्पूजयित्वाब्राह्म
णान्भोजयित्वातेभ्यःसुवर्णधेनुवस्त्रादिकृष्णोमेप्रीयता
मितिदत्त्वा ॥ यंदेवंदेवकीदेवीवसुदेवादजीजनत् ॥ भौ
मस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः ॥ सुजन्मवासु
देवायगोब्राह्मणहितायच । शान्तिरस्तुशिवञ्चास्त्वित्यु
क्त्वाप्रतिमासुद्रास्यतांब्राह्मणायदत्त्वापारणंकृत्वा व्रतंस
मापयेत् ॥ सर्वायसर्वेश्वरायसर्वपतयेसर्वसम्भवायगो
विन्दायनमोनमइति पारणायांभूतायभूतपतयइत्यादि
समापनेचमंत्रः (उद्यापनमनुक्तत्वान्नास्ति) एवंसम्भ
वायगोविन्दायनमोनमइतिपारणंकुर्यात् (ब्रह्मवैवर्त्ते)
अष्टम्यामथरोहिण्यान्नकुर्यात्पारणंक्वचित् ॥ हन्यात्पु

राकृतङ्कर्म्मंउपवासार्ज्जितंफलम् ॥ तिथिरष्टगुणंहन्ति नक्षत्रञ्चचतुर्गुणम् ॥ तस्मात्प्रयत्नतःकुर्यात्तिथिभान्ते चपारणमिति ॥ तत्रदिवसेउभयान्तेपारणमितिमुख्यः कल्पः (एतदन्यतरस्त्वनुकल्पः) तत्रयदितिथिनक्षत्र योरन्यतरस्यांतोरात्रौभवतितदातद्रात्रौ नकुर्यात्किन्तु दिवैव ॥ सर्वेष्वेवोपवासेषुदिवापारणमुच्यते ॥ अन्य थापुण्यहानिःस्याद्दत्तेधारणपारणमिति ब्रह्मवैवर्त्तेनिषे धात् ॥ अन्यातिथ्यागमोरात्रौतामसस्तैजसोदिवा ॥ तामसेपारणेकुर्वस्तामसीङ्गतिमश्नुतेइति (गरुडपुरा णाच्च ॥ यत्तुकेचिदुक्तम्) तिथिनक्षत्रयोगाद्दिवापारण स्यासम्भवेरात्रावपिकार्यन्तदुक्तंमाधवीयेस्मृत्यन्तरे ॥ तिथ्यृक्षयोर्यदाच्छेदोनक्षत्रान्तमथापिवा ॥ अर्द्धरा त्रेऽथवाकुर्यात्पारणंत्वपरेऽहनीति (ब्रह्माण्डपुराणेऽपि) नरात्रौपारणंकुर्याद्दतेवैरोहिणीव्रतात् ॥ तत्रनिश्यपि तत्कुर्याद्वर्जयित्वामहानिशामिति ॥ पूर्वोदाहृतंतुसामा न्यवाक्यद्वयञ्जन्माष्टमी पारणातिरिक्तपारणापरमिति तन्न (ब्रह्माण्डीयवचने) तावदपिशब्दश्रवणादपिवे दान्तगंरणइतिवत्स्वार्थत्यागेनोभयांतः नारदः प्रीतये एवचस्तुत्यर्थत्वेसम्भवति न सामान्यवचनबाधकत्वमे तस्ययुज्यते (यदपितिथ्यृक्षयोरितिवचनम्) तत्रापिय दमेकत्रान्वितमन्यत्र विनाबलवदनुपपत्त्यानान्वेतीति न्यायादर्द्धरात्रेयदोभयांतस्तदावचनांतरबोधिते दिने एवपारणंकुर्यान्नत्वर्द्धरात्रे पारणमित्येवंपरंन्यायश्चायंतृ तीयेसिद्धः॥ यथाचमसमन्यांश्चमासांश्चमसिनोभयक्ष

यंतिअथैतस्यहारियोजनस्यसर्वेएवंलिप्सन्तइत्यत्र च मसिपदस्यहारियोजनान्वयानभ्युपगमात् किञ्च ॥ त्व यापिचपरेऽहनीत्यस्याविवक्षांऽगीक्रियतएव ॥ अन्य थातृतीयदिनेपारणापत्तिः (यदपिमाधवेनोक्तम् ) अ र्द्धरात्रशब्देनरात्रिमात्रंगृह्यते इतितदपिप्रमाणाभावेनै वापास्तम् ॥ यद्यविवक्षांतराह्निस्यैवग्रहणौचित्यात् ॥ तस्मादस्मदुक्तएवपक्षः श्रेयान् ॥ तत्रशक्तउभयांतेऽश क्तस्त्वन्यतरांते उत्सवान्तेवाव्रतीकुर्वीत पारणमितिका लादर्शादिनिबन्धवचनात् ॥ उत्सवान्तेजागराद्युत्स वान्ते (भाद्रशुक्लाष्टमीदूर्वाष्टमीभविष्ये) शुक्लाष्टमी तिथिर्यातुमासिभाद्रपदेभवेत् ॥ दूर्वाष्टमीतुसाज्ञेया नोत्तरासाविधीयतेति ॥ इयञ्चपूर्वविद्धा (तदुक्तंबृह द्यमे) श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी ॥ पूर्वविद्धाप्रकर्त्तव्याशिवरात्रिबलेर्दिनमिति ॥ अत्रचस्त्रीणा मेवाधिकारोनपुंसाम् ॥ यानपूजयतेदूर्वांमोहादिहयथा विधि ॥ जन्मानित्रीणिवैधव्यंलभतेनात्रसंशयः ॥ त स्मात्संपूजनीयासाप्रतिवर्षंवधूजनैरिति (चन्द्रप्रकाशे पुराणसमुच्चयेऽकरणेवैधव्यरूपानिष्टश्रुतेः) अतएव नित्यमपीदम् ॥ इदंचव्रतंभाद्रशुक्लेऽगस्त्योदयसम्भाव नायांभाद्रकृष्णाष्टम्यांकार्य्यम् ॥ शुक्लेभाद्रपदेमासिदू र्वासंज्ञातथाष्टमी ॥ सिंहार्कएवकर्त्तव्यानकन्यार्केक दाचन ॥ सिंहस्थेचोत्तमासूर्येऽनादितेमुनिसत्तमेतिगो विन्दार्णवेस्कांदात् ॥ अत्रकृ यमुक्तंमदनरत्नेभविष्यपु राणे ॥ शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तमः ॥ स्था

त्यालिङ्गंततोगन्धैःपुष्पैर्धूपैःसमर्चयेत् ॥ दध्यक्षतैर्द्विज श्रेष्ठअर्घ्यंदत्त्वात्रिलोचने ॥ दूर्वाशमीभ्यांविधिवत्पूज येच्छ्रद्धयान्वितः (तत्रमन्त्रः) त्वंदूर्वेऽमृतजन्मासिवन्दि तासिसुरासुरैः ॥ सौभाग्यंसंततिंदेहिसर्वकार्य्यकरीभ व ॥ यथाशाखाप्रशाखाभिर्विस्तृताऽसिमहीतले ॥ त थाममापिसन्तानंदेहित्वमजरामरमिति ॥ भक्ष्यनियमोऽपिभविष्ये ॥ अनग्निपक्वमश्नीयादन्नंदधिफलंत था ॥ अक्षारलवणंब्रह्मन्नश्नीयान्मधुनायुतमिति ॥ इयंचज्येष्ठामूलशून्यरौहिणमुहूर्त्तव्यापिनीग्राह्या ॥ मु हूर्त्तैरौहिणेऽष्टम्यांदूर्वावायादिवापरा ॥ दूर्वाष्टमीतुसा कार्याज्येष्ठामूलंचवर्ज्जयेदितिपुराणसमुच्चयात् ॥ दि नद्वयेरौहिणेज्येष्ठामूलयोगेतदभावेवापूर्वैव ॥ श्राव णीदुर्गनवमीतिपूर्वोक्तवाक्यात् ॥ अत्रैवज्येष्ठापूजनं लैङ्गे ॥ कन्यार्केयाष्टमीशुक्लाज्येष्ठाक्षेमवतीस्मृता ॥ अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेत् (तथा) मासि भाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते ॥ यस्मिन्कस्मिन् दि नेकुर्य्याज्ज्येष्ठायाःपरिपूजनमिति स्कांदोक्तेरियंज्येष्ठा योगवसेनग्राह्या ॥ नक्षत्रयोगाभावेतुपरैवपूर्वेद्युरात्रौ नक्षत्रयोगेतुपूर्वैव (तथाचतत्रैव) नवमीसहिताकार्या अष्टमीनात्रसंशयः ॥ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्ष संयुते ॥ रात्रौयस्मिन्दिनेकुर्य्याज्ज्येष्ठायाःपरिपूजन मिति॥ तत्रैव ॥ यस्मिन्दिनेभवेज्ज्येष्ठामध्याह्नादूर्ध्वम त्यणुः ॥ तस्मिन्नहनिपूजाचन्यूनाचेत्पूर्ववासरेइति ॥ निर्णीतपूजादिनात्पूर्वदिनेऽनुराधामावाहनमुत्तरादिनम्

लेचविसर्जनम् (तथाचस्कांदे) मैत्रेणावाहयेद्देवींज्येष्ठा यांतुप्रपूजयेत् ॥ मूलेविसर्जयेद्देवींत्रिदिनंव्रतमुत्तममि ति । महालक्ष्मीयात्राप्यस्यामेवोक्ता ( काशीखंडे ) महालक्ष्म्यष्टमींप्राप्यतत्रयात्राकृतानृणाम् ॥ संपूजिते हविधिवत्पद्मासद्मनमुंचतीति ॥ व्रतस्तुएतदारभ्यआ श्विनकृष्णाष्टमी पर्यंतंषोडशदिनानिप्रत्यहंयात्रांकुर्यु रितिशिष्टाः ( अत्रव्रतमुक्तंपुराणसमुच्चये ) श्रियोऽर्च नंभाद्रपदेसिताष्टमींप्रारभ्यकन्यामयतेचसूर्ये ॥ समा पयेत्तत्रतिथौचयावत्सूर्यस्तुपूर्वार्द्धगतोयुवत्या इत्या दि ॥ कन्यामगतेसिंहस्थेसूर्येप्रारम्भः युवत्याःकन्या याःपूर्वार्द्धसूर्येवस्थितेसातिसमाप्तिरित्यर्थः ॥ प्रथमा रंभएवायंनियमः ॥ षोडशवार्षिकेतत्प्रयोगगताद्वितीयादिवर्षेऽनियमः ॥ एतत्वर्द्धरात्रातिक्रमवर्त्तिन्या मष्टम्यांकार्यम् ॥ अर्द्धरात्रमतिक्रम्यवर्त्ततेयांतरां तिथिः ॥ तदातस्यांतिथौकार्यंमहालक्ष्मीव्रतंसदेति । चंद्रप्रकाशेस्मृत्यंतरात् ॥ आश्विनशुक्लाष्टमीमहाष्टमी त्युच्यते (तथाचब्रह्मपुराणे) तत्राष्टम्यांभद्रकालीदक्ष यज्ञविनाशिनी ॥ प्रादुर्भूतामहाघोरायोगिनीकोटिभिर्वृ ता ॥ अत्राश्विनशुक्लपक्षे ॥ अतोत्रपूजनीयासातस्मिन्न हनिमानवैरिति ॥ इयंचाष्टमीनवमीयुक्ताग्राह्या(तथाच देवीपुराणे) सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी ॥ पु त्रदारधनैर्हीनाभ्रमंतीहपिशाचवदिति (मदनरत्नेस्मृ तिसंग्रहेऽपि) शरन्महाष्टमीपूज्यानवमीसंयुतासदा । सप्तमीसंयुतानित्यंशोकसंतापकारिणी ॥ जृंभेणसप्त

मीयुक्तापूजिताचमहाष्टमी ॥ इंद्रेणनिहतोजृंभस्तस्यां दानवपुंगवः ॥ तस्मात्सर्वप्रयत्नेनसप्तमीसहिताष्टमी॥ वर्जनीयाप्रयत्नेनमनुजैःशुभकांक्षिभिः ॥ सप्तमीकलयायत्रपरतश्चाष्टमीभवेत् ॥ तेनशल्यमिदंप्रोक्तंपुत्रपौत्रक्षयप्रदम् (तथा) पुत्रान्हंतिपशून्हतिहंतिराष्ट्रंसराजकम् ॥ हन्तिजातानजातांश्चसप्तमीसहिताष्टमीति (ब्रह्मवैवर्त्ते) शुक्लपक्षेऽष्टमीचैवशुक्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्यापरसंयुतेति ॥ वसुरंध्रयोरितियुग्मवचनम् ॥ अत्रत्रिमुहूर्त्तन्यूनापिसप्तमीवर्जनप्रयोजिका ॥ नत्रिमुहूर्त्तैव (तथाचपुराणे) सप्तमीशल्यसंयुक्तावर्जनीयासदाष्टमी ॥ स्तोकापिसातिथिःपुण्यायस्यांसूर्योदयोभवेदिति ॥ स्तोकाकलाकाष्ठादिमात्रापीत्यर्थः॥ इयमेवभौमयुक्तातिप्रशस्ता ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ कुजवारोभवेत्तत्रपूजनीयाप्रयत्नतइतिमदनोक्तस्मृत्यन्तरात् ॥ नवमीयुक्तालाभेतुसप्तमीयुतैवकार्या॥ तत्पराण्येवसप्तम्यापियुताकार्यामूलेनापिविशेषतइत्यादीनिवचनानिनवरात्राशक्तौ त्रिरात्राद्युक्तम् (देवीपुराणे)नवरात्रव्रतेऽशक्तस्त्रिरात्रंचैकरात्रकम्॥ व्रतंचरतियोभक्तस्तस्मैदास्यामिवांछितमिति ॥ केवलाष्टम्युपवासस्तुपुत्रवतानकार्य्यः ॥ उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत् ॥ यथातथावापूतात्माव्रतीदेवींप्रपूजयेदिति (कालिकापुराणात्) मार्गशीर्षकृष्णाष्टम्यांवार्षिकंविघ्नमुत्सृजेदिति ॥ तत्रैव ॥ तीर्थेकालोदयेस्नात्वाकृत्वातर्पणमत्वरः ॥ विलोक्यकालराजानंनि

रयादुद्धरेत्पितृनिति (उपोषणमप्युक्तमस्यामेवकाशीख
ण्डे) मार्गशीर्षसिताष्टम्यांकालभैरवसन्निधौ ॥ उपोष्य
जागरंकुर्यात्सर्वपापैःप्रमुच्यते इति ॥ अत्रोपोषणांगत
याअर्घदानमपिकार्यमिति शिवरहस्ये ॥ अत्रोपवास
जागरणयोःप्रधानयोरहोरात्रसाध्यत्वेनाहोरात्रयुतापूर्व
विद्धाग्राह्या ॥ अहोरात्रव्रतंयच्चएकमेवतिथौगतम् ॥
तस्यामुभययोगिन्यामाचरेत्तद्व्रतंव्रती॥स्मृतेः ॥ यदातु
पूर्व्वदिनेसायाह्नेउत्तरेप्रदोषेतुल्यातदपिपूर्वैव ॥ रुद्रव्र
तेषुकर्त्तव्यासंमुखीतिथिरितिब्रह्मवैवर्त्तात् ॥ यत्तुकश्चि
दुपोषणमेवप्रधानंजागरणमितितत्तुच्छम् ॥ अर्घ्यदान
स्योपोषणांगत्वेऽपिजागरणेतत्त्वायोगात् ॥ यदपिमध्या
ह्नेसंस्थितेरवावित्युपक्रम्य तदोग्ररूपादनघान्मत्तः श्री
कालभैरवः ॥ आविरासीत्ततोलोकान् भीषयन्नखिलान
पीति शिवरहस्ये ॥ मध्याह्नेकालभैरवाविर्भावात्तद्व्यापि
नीग्राह्येतिकश्चित् ॥ तदपितुच्छम् (शिवरहस्ये) मध्या
ह्नोत्तरंकृत्तिवासेश्वरंप्रायुर्देवाबिल्वादिसाधना॥ इत्यादि
नाभूयः कर्मकलापमुक्त्वाभैरवाविर्भावंचोक्त्वानुपदमेवसू
र्योप्यस्तमुपागमदित्युक्तं तत्रमध्याह्नेपराह्णेसायाह्नेवावि
र्भावानिश्चयात् ॥ अस्तुवामध्याह्नआविर्भावस्तथापि
तत्कालीनग्राह्यतायामानाभावः ॥ नह्याविर्भावकाली
नाग्राह्येतिवाक्यमस्तिकिञ्चित् ॥ जन्माष्टम्यादौतुपूजा
ख्याकर्मकालत्वेननिशीथव्यापिनीग्राह्येत्युक्तम् ॥ नज
न्मकालीयेतिसंक्षेपः (माघशुक्लाष्टम्यांभीष्मतर्पणंश्राद्धं
चोक्तंहेमाद्रौपाद्मे) माघेमासिसिताष्टम्यांसतिलंभीष्म

तर्पणम् ॥ श्राद्धंचयेनराःकुर्युस्तेस्युःसंततिभागिनइति तर्पणमन्त्रस्तुभारते ॥ भीष्मश्शान्तनवोवीरःसत्यवादीजितेन्द्रियः ॥ आभिरद्भिरवाप्नोतुपुत्रपौत्रोचितांक्रियाम् ॥ वैयाघ्रपदगोत्रायसांकृत्यप्रवरायच ॥ अपुत्राय ददाम्येतज्जलंभीष्मायवर्मणे ॥ वसूनामवतारायशंतनोरात्मजायच ॥ अर्घ्यंददामिभीष्मायआबालब्रह्मचारिणेइति (पाद्मे) ब्राह्मणाद्याश्चयेवर्णादद्युर्भीष्मायनो जलम् ॥ संवत्सरंकृतंतेषांपुण्यंनश्यतिसत्तममितिइदं जीवत्पितृकोऽपिकुर्यात् ॥ निषेधाभावात् ॥ यत्तु ॥ सपितुःपितृकृत्येषुनाधिकारःकथश्चनेति ॥ निषेधःसपित्र्यकर्मपरइतिदिक् (इत्यष्टमीनिर्णयः ॥ अथनवमी) सातु पूर्वा॥ वसुरन्ध्रयोरितियुग्मवचनात् (ब्रह्मवैवर्त्तेऽपि) अष्टम्यानवमीविद्धाकर्त्तव्याफलकांक्षिभिः॥नकुर्य्यान्नवमींतातदशम्यांतुकदाचनेति॥चैत्रशुक्लनवमीरामनवमीसा परविद्धामध्याह्नव्यापिनीग्राह्या (तदुक्तमगस्त्यसंहितायाम्) चैत्रशुक्लातुनवमीपुनर्वसुयुतायादि॥सैवमध्याह्नयोगेनमहापुण्यतमाभवेदिति ॥ नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैः ॥ उपोषणंनवम्यांवैदशम्यांपारणं भवेदितिवचनाच्च ॥ तत्रैव ॥ चैत्रमासेनवम्यांतुजातो रामस्स्वयंहरिः॥ पुनर्वस्वृक्षसंयुक्तासातिथिस्सर्वकामदा॥ श्रीरामनवमीप्रोक्ताकोटिसूर्य्यग्रहाधिका ॥ तथा ॥ केवलापिसदोपोष्यानवमीशब्दसंग्रहात् ॥ तस्मात्सर्वात्मनासर्वैःकार्य्यवैनवमीव्रतम् ॥ उपोषणंजागरणंपितृनुदिश्यतर्पणम् ॥ तस्मिन्दिनेतुकर्त्तव्यंब्रह्मप्रा

तिमभीप्सुभिः ॥ अत्रपूर्वदिनएवमध्याह्नव्यापिनीचेत्पूर्वादिनद्वयेतद्व्याप्तावव्याप्तावेकदेशव्याप्तौचसनक्षत्राचेत्पूर्वान्यथोत्तरेति ॥ अष्टमीविद्धानिषेधादिति ॥ तत्रैव ॥ यस्तुरामनवम्यांतुभुंक्तेमोहाद्विमूढधीः ॥ कुम्भीपाकेषुघोरेषुपच्यतेनात्रसंशय इत्यकरणेप्रत्यवायश्रुतेश्चकाम्यम् ॥ रामनवमीव्रतंयत्तुतद्भक्तानामेवनित्यमिति तन्न संकोचेमानाभावात् ॥ जन्माष्टमीशिवरात्र्यादिव्रतेऽपितथापत्तेः (अथव्रतपद्धतिः) व्रतपूर्वदिनेसायंदन्तधावनंव्रतादिनेचप्रातः॥ सूर्यस्सोमोयमःकालस्संध्येभूतान्यहःक्षयः॥ पवनोदिक्पतिर्भूमिराकाशश्चचरानराः॥ब्राह्मयंशासनमास्थायकल्पयध्वाभिसन्निधिमित्युक्त्वाफलपुष्पाक्षतसहितजलपूर्णताम्रपात्रंगृहीत्वामासाद्युल्लिख्यपापक्षयकामोऽमुकफलकामोवारामचन्द्रप्रीतये श्रीरामनवमीव्रतमहंकरिष्ये ॥ नवमींत्वद्ययामेष्वष्टसुराघवानेनप्रीतोभवत्वंभोसंसारात्त्रायस्वमांहरइत्युक्त्वापात्रस्थंजलंक्षिपेत् ॥ ततःशक्तितोहैमींरामप्रतिमांकृत्वामन्त्रोच्चारणपूर्वकंकपोलौस्पृष्ट्वा मूलमन्त्रंप्रणवादिचतुर्थ्यन्तंनामरामायदेवत्वसंरक्षायैस्वाहेतिमन्त्रंपठन्प्राणप्रतिष्ठांकुर्यात्॥ततः॥कोमलांगंविशालाक्षमिंद्रनीलसमप्रभम् ॥ दक्षिणांगेदशरथंपुत्रावेक्षणतत्परम् ॥ पृष्ठतोलक्ष्मणंदेवंसच्छत्रंकनकप्रभम् ॥ पार्श्वेभरतशत्रुघ्नौतालवृन्तकरावुभौ ॥ अग्रेऽव्यग्रंहनूमन्तंरामानुग्रहकांक्षिणमितिध्यात्वाषट्कोणमध्येपूजयेत् ॥ श्रीरामप्रतिमासमीपेषट्कोणमध्येकौशल्यांदशरथंचपूजयेत् ॥ षट्

कोणेषु॥ रांहृदयायनमः॥ रींशिरसेस्वाहा ॥ रुंशिखा यैवषट् ॥ रैंकवचायहुम् ॥ रौंनेत्रायवौषट् ॥ रःअस्त्रा यफट्॥इतिहृदयादीनिषट्॥षट्कोणवाह्याष्टदलकमल दलमूलेषुहनूमन्तंसुग्रीवंभरतंविभीषणं लक्ष्मणमङ्गदं शत्रुघ्नंजाम्बवन्तम् ॥ चतुर्दलमध्येधृष्टिंजयन्तंविजयंसु राष्ट्रंराष्ट्रवर्द्धनमकोपंधर्मपालंसुमन्त्रंचदलाग्रेषुइन्द्रम ग्निंयमंनिर्ऋतंवरुणं वायुंकुवेरमीशानंचाष्टौलोकपाला न् ॥ तदग्रेवज्रंशक्तिंदण्डंखड्गंपाशमंकुशगदाशूलंचेति तेषामायुधानिचपूजयेत् (श्रीरामपूजायांमूलमन्त्रः) वै दिकोवावैष्णवः ॥ प्रणवादिचतुर्थ्यंतनमोऽतंनामवाम न्त्रः ॥ इन्द्रोऽग्निश्चयमश्चैवनैर्ऋतोवरुणोऽनिलः ॥ कु बेरईशोब्रह्मादिदिक्पालास्स्नापयन्तुते ॥ इतिस्नाने ॥ रामस्यजननीचासिरामात्मकमिदंजगत् ॥ अतस्त्वांपू जयाम्यद्यलोकमातर्नमोऽस्तुते (इतिकौशल्यापूजाया म्) ॐनमोदशरथायेतिदशरथपूजायाम् ( इतरे षांमूलमन्त्रः ) प्रणवादिचतुर्थ्यन्तनमोऽतनामवा ॥ उच्चस्थेग्रहपञ्चकेसुरगुरौसेन्दौनवम्यांतिथौ लग्नेकर्क टकेपुनर्वसुदिनेमेषंगतेपूषणि ॥ निर्दग्धुंनिखिलाः पलाशसमिधो मध्यादयोध्यारणेराविर्भूतमभूतपूर्ववि भवंयत्किंचिदेकंमहः ॥ इतिमध्याह्नेजन्मभावना ॥ वा द्यवादिवादनंचपुष्पांजलेः पूर्वंफलपुष्पांबुसंपूर्णंगृहीत्वा शंखमुत्तमम् ॥ अशोकरक्तकुसुमैर्युक्तंचतुलसीदलैः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ दानवानांविना शायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातो

रामस्स्वयंहरिः ॥ गृह्णात्वर्घ्यंमयादत्तंभ्रातृभिःसहितो ममेतिमंत्रेणार्घ्यंदद्यात् ॥ पुष्पांजलिंपुनर्दत्त्वायामे यामेह्यतन्द्रितः ॥ पूजयन्विधिवद्भक्त्यादिवारात्रंन येद्बुधइति ॥ ततःस्तोत्रपाठपुराणश्रवणादिभीरात्रौजा गरणंकृत्वा ॥ द्वितीयेह्निप्रातःकालीनंकृत्वापूर्ववदेव श्रीरामपरिवारदेवताश्चसंपूज्यश्रीरामः प्रीयतामितिते भ्यःसुवर्णधेनुवस्त्रादिदत्त्वा प्रतिमामुद्दास्यतांविप्रायद त्वापारणंकृत्वाव्रतंसमापयेत् ( आश्विनशुक्लनवमीम हानवमीत्युच्यते ॥ तदुक्तंप्रतापमार्त्तंडेलैंगे ) दुर्गापू जासुनवमीमूलाद्यृक्षत्रयान्विता ॥ महतीकीर्त्तितात स्यांदुर्गांमहिषमर्दिनीमितिपूजयेदितिशेषः ॥ तत्रपूर्व विद्धासाग्राह्यायुग्मवाक्यात् ( बृहद्यमोऽपि ) श्रावणी दुर्गनवमीदुर्गाचैवहुताशनी ॥ पूर्वविद्धाप्रकर्त्तव्याशि वरात्रिबलेर्दिनमिति ॥ अस्यामेवदुर्गापूजनहोमबलि दानादिकार्यमिति ( राजमार्त्तण्डे ) नवम्यांजपहोमं चसमाप्यविधिवद्बलिमिति ( ब्रह्मवैवर्त्तेऽपि ) अत्रापं राह्णिकेकालेबलिदानंप्रशस्यते । दशमींवर्जयेत्तत्रना त्रकार्याविचारणेति ॥ तेननवम्यामुपक्रम्यनवम्यामे वसमापयेत् ( गौडनिबंधेऽप्येवम् ) केचिदष्टमीमार भ्यनवम्यांसमापयन्ति ॥ तत्रमूलंशिष्टाचारएव ॥ अ त्रडामरतंत्रेविशेषः ॥ पायसंसर्पिषायुक्तंतिलैश्शुक्लैर्वि मिश्रितम् ॥ होमयेद्विधिवद्भक्त्यादशांशेननृपोत्तमः ॥ रुद्राध्यायेयथाहोमंमंत्रेणानेनसाधयेत् ॥ प्रधानद्रव्य मुद्दिष्टपायसान्नंतिलास्तथा ॥ किंशुकैस्सर्षपैःपूगैर्ला

जादुर्वांकुरैरपि ॥ यवैर्वाश्रीफलैर्दिव्यैर्नानाविधफ
लैरपि॥ रक्तचंदनखंडैश्चगुग्गुलैश्चमनोहरैः ॥ प्रति
श्लोकंचजुहुयात्सर्वंद्रव्याणिचक्रमादिति ॥ यत्तु
केचिदष्टम्यांजागरणंकुर्यान्नवम्यांपारणंतथा ॥ दश
म्यांचविसर्गस्स्यादभिषेकश्चमाधवेतिरुद्रयामलात् ॥
नवम्यांचाविशालाक्षकार्याहोमादिकाक्रिया ॥ पार
णंचप्रकुर्वीतदेवीपूजनपूर्वकम् ॥ दशम्यामिश्रितायत्र
पारणेनवमीभवेत् ॥ नृपहीनंभवेद्राष्ट्रंदशम्यांपारणेकृ
ते ॥ तस्मात्तुपारयेदेवनवम्यांभक्तितत्परः ॥ नवम्यां
पारितादेवीकुलवृद्धिंप्रयच्छति ॥ दशम्यांपारितादेवी
कुलनाशंकरोतिवै ॥ तस्मात्तुपारणंकुर्यान्नवम्यांविबु
धाधिपेति ॥ देवीपुराणादौचनवम्यामेवनवरात्रपारण
मित्याहुस्तन्न ।। एवंचविंध्यवासिन्यांनवरात्रोपवास
तः ॥ एकभक्तेननक्तेनस्वशक्त्यायाचितेनवा ॥ अथ
वानवनक्तैश्चनवरात्रंसमापयेदिति॥ भविष्यादिवचोभि
रुपवासादिषुशक्त्याविहितस्यनवतिथ्यधिकरणानिनव
रात्रंसमापयेदिति नामधेयांतरसत्वाच्चनवतिथिरूपगु
णविधिरेवयुक्तोनवरात्रोपवासइतिननामधेयम्॥नवमी
पारणंविधायकानिदशमीनिषेधकानिचपूर्वोक्तानि वचां
तुमहानिबन्धादिष्वदर्शनात्प्रायोनिर्मूलान्येव ॥ समू
लत्वेऽपि तेषांपूर्वेद्युरष्टमीविद्धत्वेननवमीप्रयुक्त उपवासे
जातेपरेद्युश्चावशिष्टकिंचिन्नवमीसत्वेनवम्यंतः पारणा
विधायकत्वम् ॥ नतुप्राप्तोपवासबाधकत्वम् ॥ एवंस
र्वेषामुपवासानांप्रातरेवहिपारणमिति वचोवगतावशि

ष्टनवम्यन्तः पारणस्योपोष्यतिथ्यंतपारणविधिना बा धितस्यप्रतिप्रसवविधित्वेनैषांलाघवम् ॥ अन्यथाप्रा प्तविधितयागौरवम् ॥ अतश्चदशम्यांपारणंनकार्यमि त्येतेषामनुवादकत्वमेव ॥ नविधायकत्वम् ॥ तिथेर्वृद्धौ ह्रासेऽपिवानवम्यांपूजोपवासादिकार्यमेव ॥ आश्विने शुक्लपक्षेतुकर्त्तव्यंनवरात्रकम् ॥ प्रतिपदादिक्रमेणैव यावच्चनवमीभवेदितिहेमाद्रौधौम्योक्तेः ॥ यावच्छब्दो भिव्याप्तौ ॥ नवम्यांपूर्ववत्पूजाकर्त्तव्याभूतिमिच्छता ॥ दक्षिणांवस्त्रयुग्मञ्चआचार्यायनिवेदयेदितिमतंस्यात् ॥ उत्तरेणनवम्यांतुबलिनापूजयेच्छिवम् ॥ श्रवणेनदश म्यांतुप्रणिपत्याविसर्जयेदितिदेवीपुराणात् ॥ तत्रैव ॥ महानवम्यांपूजेयंस्वर्गमोक्षप्रदायिनीत्युक्तेश्च ॥ अष्ट म्यांनवम्यांवासमाप्तौ ॥ एतद्वचोबाधस्स्यात् ॥ न चैकतिथिक्षयेआश्विनेप्रतिपन्मुखाः पुण्यास्तुतिथयोन वेत्यादिदेवीपुराणीयनवतिथिकालरूपविधिविरोधः ॥ सावनाष्टदशदिनापक्षावपिवच्चन्द्र तिथिनवसंख्याया बाधात् ॥ चान्द्रप्रतिपदादीनामेवतिथ्यदेशकत्वाच्च ॥ वस्तुतस्तुप्रतिपदादिक्रमेणैव यावच्चनवमीभवेदित्या दिपूर्वोक्तानेकवचनैर्नवमीपर्यन्तं वृतानुष्ठानोक्तयाचति थिनवसंख्यायाःप्रचयशिष्टत्वेनविध्यभावान्नांगत्वम् ॥ यथादशदशैकंचमसमनुप्रलपन्तीति दशचमसेषुप्रति चमसंदशब्राह्मणविधिनाशतंब्राह्मणाः सोमान्भक्षय न्तीतिशतसंख्यायाःप्रचयशिष्टतनयानुवादः।यथावाप्रा तिस्विक्सामिदादिविधिसिद्धायाः पञ्चप्रयाजाइत्यन्त

इतिपञ्चतायाः॥ येषुतुवचस्सुनवरात्राभिधंकर्म्मनक्तवृत मितिस्थितिरिति ॥ आश्विनेशुक्लपक्षेतुनवरात्रवृतंशुभ मित्यादिवृतशब्दसामानाधिकरण्यं तत्रापिकदाचित्क विधित्सितनवसंख्यारूपगुणप्राप्तावपिनामधेयमेव न वरात्रपदम्॥दृष्टंचतथावाजपेयेकदाचित्कसुराग्रहविधि नानामधेयम् ॥ वस्तुतस्तुचान्द्रातिथिगतनवसंख्यानि त्यप्राप्तैवेतिदिक् ॥ विस्तरश्चात्रतातचरणकृतद्वैतनि र्णयेबोध्यः ॥ पारणंतुसूतकेऽपिकार्यम् ( तदुक्तंरुद्रयाम ले) सूतकेपारणंकुर्यान्नवम्यांहोमपूर्वकमिति ॥ एवंस्त्री भिरपिरजोदर्शनमध्येकार्यम् (तदाहसत्यवृतः) प्रारब्ध दीर्घतपसांनारीणांयद्रजोभवेत् ॥ नतत्रापिवृतस्यस्यादु परोधःकदाचनेतिएतच्चसधवापरंज्ञेयम्॥विधवायास्तु त्रिरात्रमध्येभोजननिषेधादितिकेचित्॥तन्न॥निषेधस्य रागप्राप्तभोजनगोचरत्वेनवैधपारणविषयत्वायोगात्॥ वस्तुतस्तुरजस्वलाया विधवायास्त्रिरात्रमध्येभोजननि षेधएवखपुष्पायमानइतिदिक्(इतिनवमीनिर्णयः॥ अ थदशमी )सातुकृष्णापूर्वाशुक्लोत्तरा ॥ सम्पूर्णादशमी कार्यापरयापूर्वयाऽथवा ॥ युक्तानदूषितायस्मादितिसा सर्वतोमुखीति (अङ्गिरःस्मृतेः) अयंचविकल्पोऽव्यव स्थितः ॥ शुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविः ॥ कृष्णपक्षेतिथिर्ग्राह्यायस्यामस्तमितोरविरितिवचोऽ त रात् ॥ माधवमतेऽप्येवम् ॥ यत्तुहेमाद्रिः॥ दिनद्वयेक र्मकालव्याप्तभावेऐच्छिकोविकल्पइत्याह ॥ तन्न ॥ शास्त्रतोऽव्यवस्थासंभवेऐच्छिकत्वायोगात् ॥ उपवासे

तुसर्व्वापिसर्वमतेपूर्वैव ॥ नागाविद्धातुयाषष्ठीशिवाविद्धाचसप्तमी ॥ दशम्येकादशीविद्धानोपोष्यासाकथंचनेति शिवरहस्योक्तेः ( यत्तुप्रतापमार्त्तण्डेस्कांदे ) दशमीचैवकर्त्तव्यासदुर्गाद्विजसत्तमेति ॥ तदप्युपवासपरम् (ज्येष्ठशुक्लदशमीदशहरा) ज्येष्ठेमासिसितेपक्षेदशमीहस्तसंयुता ॥ हरतेदशपापानितस्माद्दशहरास्मृता ॥ तस्यांस्नानंप्रकुर्वीतदानञ्चैवाविशेषतइतिहेमाद्रौब्राह्मयोक्तेः (दशपापानिचाहमनुः) पारुष्यमनृतंचैवपैशून्यंचापिसर्वशः ॥ असम्बन्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ॥ अदत्तानामुपादानंहिंसाचैवाविधानतः॥ परदारोपसेवाचकायिकंत्रिविधंस्मृतम् ॥ परद्रव्येष्वभिध्यानंमनसानिष्टचिन्तनम् ॥ वितथाभिनिवेशश्चत्रिविधंकर्ममानसमिति (स्कांदेऽपि) ज्येष्ठेमासिसितेपक्षेदशम्यांबुधहस्तयोः ॥ व्यतीपातेगरानन्देकन्याचन्द्रेवृषेरवौ ॥ दशयोगेनरस्स्नात्वासर्वपापैःप्रमुच्यतेइति ॥ इयंचयोगविशेषवशात्पूर्वापराग्राह्या (काशीखण्डे ) दशाश्वमेधिकेस्नात्वामुच्यतेसर्वपातकैः ॥ लिङ्गंदशाश्वमेधेशंदृष्ट्वादशहरातिथौ ॥ दशजन्मार्ज्जितैःपापैस्त्यज्यतेनात्रसंशयः ( स्कान्दे ) यांकांचित्सरितंप्राप्यदद्यादर्घंतिलोदकम् ॥ मुच्यतेदशभिःपापैस्समहापातकामयैः ॥ यदाज्येष्ठोमलमासोभवतितदामलमासएवकार्यम् ॥ दशहरासुनोत्कर्षश्चतुर्ष्वपियुगादिषु ॥ उपाकर्ममहाषष्ठ्योर्ह्येतदुक्तंवृषादितः ॥ ( इतिहेमाद्रौ ) ऋष्यशृंगोक्तेः ॥ आश्विनशुक्लदशमी

विजयदशमीत्युच्यते ॥ सातुदशमीपूजायात्रादौनक्ष
त्रोदयव्यापिनीग्राह्या ( तदुक्तंरत्नकोषे ) ईषत्सन्ध्या
मतिक्रांतःकिंचिदुद्भिन्नतारकः ॥ विजयोनामकालोऽयं
सर्वकार्यार्थसाधकइतिचिंतामणावपि ॥ आश्विनस्य
सितेपक्षेदशम्यांतारकोदये ॥ सकालोविजयोज्ञेयस्सर्व
कार्यार्थसिद्धये ॥ दिनद्वयेतद्व्याप्तौपूर्वैव ॥ यापूर्णा
नवमीयुक्तातस्यांपूज्याऽपराजिता ॥ क्षेमार्थंविजयार्थं
चपूर्वोक्तविधिनानरैः ॥ नवमीशेषयुक्तायांदशम्यामपरा
जिता ॥ ददातिविजयंदेवीपूजिताजयवर्द्धिनी ॥ एका
दश्यांप्रकुर्वीतपूजनंचपराजितामितिस्कांदोक्तेः(तत्रैव)
दशमींयःसमुल्लंघ्यप्रस्थानंकुरुतेनरः ॥ तस्यसंवत्सरं
राज्येनकोपिविजयीभवेदिति ॥ दिनद्वयतारकोदयका
लाभावेपरदिनएकादशमुहूर्त्तेयात्राकार्या ॥ आश्विन
स्यसितेपक्षेदशम्यांसर्वराशिषु ॥ सायंकालेशुभायात्रा
नदिवाविजयक्षणे ॥ एकादशेमुहूर्त्तेऽपिविजयःपरिकी
र्त्तिता ॥ तस्मिन्सर्वैर्विधातव्यायात्राविजयकांक्षिभिरि
तिभृगूक्तेः॥परदिनएकादशमुहूर्त्तव्याप्त्यभावेऽपि श्रवण
योगश्चेत्तदैवयात्राकार्यापूजातुपूर्वदिनएव॥उदयेदशमी
किंचित्संपूर्णैकादशीयादि॥श्रवणर्क्षंयदाकालेसातिथिर्वि
जयाभिधेतिमदनरत्नेदक्षोक्तेः॥श्रवणर्क्षेतुपूर्णायांकाकु
त्स्थःप्रस्थितोयतः ॥ उल्लंघ्ययेयुस्सीमानंतद्दिनर्क्षेततो
नराइतिभविष्याच्च(अत्रकृत्यभविष्ये) शमींसलक्षणो
पेतामीशानाशाप्रतिष्ठिताम् ॥ संप्रार्थ्यतांचसंपूज्यत्वी
शानीसुमुखोभवेत् ॥ शमीशमयतेपापंशमीलोहितकं

टका ॥ धारयित्र्योर्ज्जनास्त्राणांरामसंवाददायिनी ॥ करिष्यमाणायात्रायायथाकालंसुखंमम ॥ तत्रनिर्विघ्न कर्त्रीत्वंभवश्रीरामपूजिते ॥ गृहीत्वासाक्षतामाद्रांश मीमूलगतांमृदम् ॥ गीतवादित्रनिर्घोषैरानयेत्स्वगृहंप्र ति ॥ ततोभूषणवस्त्रादिधारयेत्स्वजनैःसहेतिदिक् (इ तिदशमीनिर्णयः ॥ अथैकादशी) तत्रोपवासोनित्यः काम्यश्च (तत्राद्यमाहसनत्कुमारः) नकरोतीहयोमू ढएकादश्यामुपोषणम् ॥ सनरोनरकंयातिरौरवंतमसा वृतामितिगारुडे ॥ उपोष्यैकादशीनित्यंपक्षयोरुभयोर पीति (काम्यस्तुकौर्म्मे) यदीच्छेद्विष्णुसायुज्यंश्रियंसं ततिमात्मनः ॥ एकादश्यांनभुञ्जीतपक्षयोरुभयोरपी ति (स्कांदेऽपि) यदीच्छेद्विपुलान्भोगान्भाक्तिंचात्य न्तदुर्ल्लभाम् ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपी ति (अथाधिकारीकात्यायनः) अष्टवर्षाधिकोमर्त्योह्य शीतिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोर पीति ॥ अष्टवर्षाधिकइत्युपनयनोत्तरत्वस्योपलक्षण म॥अपिचावेदतुल्यत्वादुपायेनप्रवर्त्तेरान्नितिषष्ठेस्थापि तत्वात् ॥ एतच्चगृहस्थव्यतिरिक्तपरम् (तदुक्तंकौर्म्मे) ए कादश्यांनभुञ्जीतपक्षयोरुभयोरपि ॥ वनस्थपातिधर्मोऽ यंशुक्लामेवसदागृहीति ॥ एकादश्यांनभुञ्जीतपक्षयोरु भयोरपि ॥ ब्रह्मचारिचनारीचशुक्लामेवसदागृहीति ॥ नारीविधवा ॥ ब्रह्मचारिसाहचर्य्यात् ॥ सधवायास्तु पक्षद्वयेऽपिनिषेधः॥ पत्यौजीवतियानारीउपोष्यव्रतमा चरेत् ॥ आयुष्यंहरतेभर्त्तुःसानारीनरकंव्रजेदितिविष्णु

क्तेः॥ नास्तिस्त्रीणांपृथक्यज्ञोनव्रतंनाप्युपोषणम्॥ पतिंशुश्रूषतेयातुतेनस्वर्गेमहीयतेइतिमनूक्तेश्च॥तथा॥ यद्देवेभ्योयच्चपित्रादिकेभ्यः कुर्याद्भर्त्ताऽभ्यर्चनंसत्क्रियांच ॥ तस्यह्यर्द्धंसाफलंनान्यचित्तानारीभुङ्क्तेभर्तृशुश्रूषयैवेति ॥ भार्यापत्यौमृतेनैवव्रतादीनांचरेत्सदेतिकात्यायनोक्तेः ॥ चातुर्मास्यांतर्गतातुकृष्णाऽपिगृहणोपोष्या॥शयनीबोधनीमध्येयाकृष्णैकादशीभवेत्॥सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचनेति (पाद्मात्)एतच्चापुत्रगृहिविषयम्॥पुत्रवतस्त्वत्रापिनिषेधः॥ संक्रान्त्यामुपवासश्चकृष्णैकादशवासरे॥चन्द्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृहीति (नारदोक्तेः) आदित्येऽहनिसंक्रान्तौग्रहणेचन्द्रसूर्ययोः ॥ पारणञ्चोपवासंचनकुर्यात्पुत्रवान्गृही॥ तत्प्रयुक्तोपवासस्यानिषेधोऽयमुदाहृतः ॥ प्रयुक्त्यंतरयुक्तस्यनाविधिर्ननिषेधनमिति ॥ (जैमिनिस्मृतेश्चस्मृत्यंतरेऽपि) विधवायावनस्थस्ययतेश्चैकादशीद्वये ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणेति ॥ हेमाद्रिरप्येवम्॥ काम्यायांकृष्णापवादमाह नारदः॥ पुत्रवाँश्चसभार्यश्चबन्धुयुक्तस्तथैवच ॥ उभयोःपक्षयोःकाम्यव्रतंकुर्यात्तुवैष्णवमिति॥ वैष्णवैस्तुकृष्णाप्युपोष्येत्याहसएव ॥ नित्यंभक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ॥ पक्षेपक्षेचकर्त्तव्यामेकादश्यामुपोषणम्॥ सपुत्रश्चसभार्यश्चसज्जनोभक्तिसंयुतः॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति (तत्रैकादशीद्वेधा)शुद्धादशमीविद्धाच ॥ आद्यागारुडे॥ उदयात्प्राग्यदा

विप्रमुहूर्त्तद्वयसंयुता ॥ सम्पूर्णैकादशीज्ञेयातत्रैवोपवसे द्गृहीति ॥ गृहीवैष्णवः ॥ स्मार्त्तविषयेतुतत्रैव ॥ आदित्योदयवेलायामारभ्यषष्टिनाडिकाः ॥ सम्पूर्णैकादशी नामकार्याधर्मफलेप्सुभिरिति (दशमीविद्धाऽपिद्वेधा) अरुणोदयेसूर्योदयेचदशमीसत्वेन (तत्राद्याभविष्यपुराणे) अरुणोदयकालेतुदशमीयदिदृश्यते ॥ सविद्धैकादशीतत्रपापमूलमुपोषणम् ॥ तथा ॥ अरुणोदयवेलायांदिशागन्धोभवेद्यदि ॥ दुष्टंतत्तुप्रयत्नेनवर्ज्जनीयंनराधिप ॥ दिशादशमी ॥ दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ॥ नैवोपोष्यंवैष्णवेनतद्दिनैकादशीव्रतम् ॥ इत्यादिभिर्वाक्यैररुणोदयेदशमीसत्वेएकादशीविद्धा ॥ यद्यपिसौरधर्मेषु ॥ आदित्योदयवेलायांयामुहूर्त्तद्वयान्विता ॥ सैकादशीतुसम्पूर्णाविद्धान्यापरिकीर्त्तितेति ॥ तदप्यरुणोदयवेलायांदशमीसत्वेएकादश्याविद्धत्वपरंमुहूर्त्तद्वयस्यारुणोदयपरिमाणत्वात्(अतएवहेमाद्रौस्मृतिः)निशिप्रांतेतुयामार्द्धेदेववादित्रवादने ॥ सारस्वतानध्ययनेचारुणोदयउच्यतेइति ॥ यामार्द्धमपिमुहूर्त्तद्वयमेव ॥ यत्तु ॥ उदयात्प्राक्चतस्त्रस्तुनाडिका अरुणोदयइति ॥ तदपिद्वात्रिंशद्घटिकारात्रिमानपक्षे मुहूर्त्तद्वयस्यतावत्परिमाणत्वादुक्तमितितातचरणाः ॥ यदपिब्रह्मवैवर्त्तीयम् ॥ चतस्रोघटिकाःप्रातररुणोदयनिश्चयः ॥ चतुष्टयविभागोऽत्रवेधादीनांकिलोदितः ॥ अरुणोदयवेधःस्यात्सार्द्धन्तुघटिकात्रयम् ॥ अतिवेधोद्विघटिकःप्रभासंदर्शनाद्रवेः ॥ महावेधोऽपितत्रैवदृश्य

तेकोनदृश्यते॥ तुरीयस्तुविहितोयोगःसूर्योदयेसतीत्यरु
णोदयवेधातिवेधमाह वेधयोगसंज्ञाकरणमर्वाक्दोषाति
शयार्थम्॥ सार्द्धंतुघटिकात्रयंचतस्रोघटिकाइतिचद्विमु
हूर्त्तद्वयस्यरात्रिमानवशेन कदाचित्सम्भवन्मुहूर्त्तद्वयारु
णोदयपरमेव ( यत्तुब्रह्मवैवर्त्ते ) अर्द्धरात्रेतुकेषांचिद्दश
म्यावेधइष्यते ॥ कपालवेधइत्याहुराचार्याथेहरिप्रिया
इतिकैमुतिकरीत्याअरुणोदयवेधानिंदार्थमितिमाधवः॥
तत्वंतुपूर्वचतुर्यामेषु व्रतसंकल्पपूजावर्ज्जनार्थमित्यनुप
दमेववक्ष्यते ॥ यदपि ॥नागोद्वादशनाडीभिर्दिक्पञ्चद
शभिस्तथा ॥भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमि
तिस्कांदे (तद्व्यवस्थोक्तानिगमे) सर्वप्रकारवेधोऽयमुप
वासस्यदूषकः ॥ सार्द्धसप्तमुहूर्त्तस्तुयोगोऽयंबाधतेव्रत
मिति ॥ व्रतमुपवासभिन्नमितिमाधवः (तत्रारुणोदय
वेधोवैष्णवपरः) तद्वाक्येवैष्णवग्रहणात्॥ पारिशेषात्सू
र्योदयवेधो वैष्णवभिन्नपरस्तएवस्मार्त्तपदेनव्यवह्रियंते
ग्रन्थेषु (वैष्णवलक्षणंतुगारुडे) वैखानसाद्यागमोक्तदी
क्षांप्राप्तोहिवैष्णवः (माधवीयेस्कान्देऽपि) परमापदमा
पन्नोहर्षेवासमुपस्थिते ॥ नैकादशीन्त्यजेत्सोऽपियस्य
दीक्षास्तिवैष्णवी ( अन्यच्च ) विष्णवर्पिताखिलाचारः
सहिवैष्णवउच्यते (भविष्येऽपि) यथाशुक्लातथाकृष्णाय
थाकृष्णातथोत्तरा ॥ तुल्येतेमन्यतेयस्तुसहिवैष्णवउ
च्यते ॥ तत्रशुद्धैकादशीचतुर्द्धा। अधिकैकादशिका।
अधिकाद्वादशिका। उभयाधिका । अनुभयाधिकाचे
ति। एवंविद्धापि॥ शुद्धायामेकादश्याधिक्येवृहद्यमः॥

सम्पूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ लुप्यतेद्वादशी तत्रउपवासःकथम्भवेत् ॥ उपोष्येद्वेतिथीतत्रविष्णुप्री णनतत्परैरिति ॥ विष्णुप्रीणनतत्परावैष्णवाः ॥ तदित रस्मार्त्तान्प्रतितुस्कान्दे ॥ प्रथमेऽहनिसम्पूर्णाव्याप्या होरात्रसंयुता ॥ द्वादश्यान्तुतथातातदृश्यतेपुनरेवच ॥ पूर्वाकार्यागृहस्थैश्चयतिभिश्चोत्तराविभोरिति ॥ एत च्चापरेद्युर्द्वादशीनचेदिति ॥ शुद्धायांद्वादशीमात्राधि क्येतुमानवः ॥ नचेदेकादशीविष्णौद्वादशीपरतःस्थि ता ॥ उपोष्यैकादशीतत्रयदीच्छेत्परमम्पदामिति ( वि ष्णौद्वादश्याम् ) उभयाधिक्येतुशुद्धाविद्धाचपरैवका र्या ॥ सम्पूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ सर्वैरेवोत्त राकार्यापरतोद्वादशीयदीति ( यत्तुहेमाद्रौपाद्मे ) विद्धा प्यविद्धाविज्ञेयापरतोद्वादशीनचेत् ॥ अविद्धापिचविद्धा स्यात्परतोद्वादशीयदि ॥ तदप्युभयवृद्धौज्ञेयम् ॥ अनु भयाधिक्येतुसन्देहएव॥विद्धैकादश्याधिक्येतुप्रचेताः॥ एकादशीविवृद्धाचेच्छुक्लेकृष्णेविशेषतः ॥ उत्तरान्तुय तिःकुर्यात्पूर्वामुपवसेद्गृहीति ॥ अरुणोदयविद्धायांद्वा दशीमात्राधिक्येतुपरेद्युरुपवासः ( तदाहव्यासः ) एका दशीयदालुप्तापरतोद्वादशीभवेत् ॥ उपोष्याद्वादशीत त्रयदीच्छेत्परमाङ्गतिमितिमाधवः ॥ तन्न ॥ लोपपदस्य सूर्योदयास्पर्शाख्येऽवमेप्रसिद्ध्यासूर्योदयगतदशमी वि द्धायामेतद्वचनप्रवृत्तेः अतोनेदंशुद्धन्यूनाधिकद्वादशि कायामुत्तरादिनउपवासविधायकम् ॥ यदपि ॥ केश्चि दलुप्तेतिछित्वेदमेतत्परतयायोजितम् ॥ तच्चिन्त्यम् ॥ अ

कारप्रश्लेषेमानाभावात् ॥ दिनक्षयेतुपुत्रवद्गृहस्थेनो पवासोनकार्यः ( तदाहपितामहः ) एकादश्यांदिनक्ष येउपवासङ्करोतियः॥ तस्यपुत्राविनश्यन्तिमघायांपिण्ड तोयथेति (दिनक्षयस्तुपाद्मे) द्वौतिथ्यन्तावेकवारेयस्मि न्सस्याद्दिनक्षयइति ॥ दिनक्षयेचयउपवासस्यनिषे धःसनिराहारस्यैवतथाचवायवीये ॥ उपवासनिषेधेतु भक्ष्यङ्किञ्चित्प्रकल्पयेत् ॥ नदूष्यत्युपवासेनउपवासफ लंलभेत् ॥ एवंकृष्णैकादश्यादावपिगृहस्थस्य ॥ तत्रैव॥ नक्तंहविष्यान्नमनोदनंवा फलन्तिलाःक्षीरमथाम्बुचा ज्यम् ॥ यत्पञ्चगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तर ञ्चेति ॥ व्रतेविशेषःस्मृत्यन्तरे ॥ दशम्यादिमहीपालत्रि दिनम्परिवर्ज्जयेत् ॥ गन्धन्ताम्बूलपुष्पादिस्त्रीसम्भो गंमहायशाः ॥ स्त्रीसम्भोगनिषेधस्तुऋतुकालादन्यत्रे ति (अह्निकान्तेउक्तम्) कांस्यंमांसंमसूरञ्चक्षौद्रञ्चानृ तभाषणम् ॥ पुनर्भोजनमत्याशंदशम्याम्परिवर्ज्जये त् (कौर्म्ये) कांस्यंमांसंमसूरञ्चचणकान्कोरदूषकान् ॥ शाकंमधुपरान्नञ्चत्यजेदुपवसंस्त्रियाम् ( मात्स्ये ) कां स्यंमांसंसुरांक्षौद्रन्तैलंवितथभाषणम् ॥ व्यायामञ्च प्रवासञ्चदिवास्वापञ्चमैथुनम् ॥ तिलपिष्टंमसूरञ्चदश म्यादिषुवर्ज्जयेत् ॥ दशमींप्रकृत्यनारदीये ॥ अक्षार लवणाःसर्वेहविष्यान्ननिषेविणः ॥ अवनीतलपशयनाः प्रियासङ्गविवर्ज्जिताः (अन्यत्रापि) दशम्यामेकभक्त न्तुकुर्वीतनियतेन्द्रियः ॥ आचम्यदन्तकाष्ठन्तुखादेत तदनन्तरम् ॥ ततश्चानन्तरंविप्रब्रह्मचारीजितेन्द्रियः॥

रात्रिन्नयेत्ततःपश्चात्प्रातःस्नात्वासमाहितः ॥ उपवा
सन्तुसङ्कल्प्यमंत्रपूतञ्जलम्पिबेत्॥ दशम्यामेकभक्तश्चप्र
काम्यैकादशीपरम्॥सायामाद्यन्तयोरह्नो:सायंप्रातश्च
मध्यमे॥उपवासफलंप्रेप्सुर्जह्याद्भक्तचतुष्टयम्॥अथनि
त्योपवासीचेत्सायंप्रातर्भुंजिक्रियाम् ॥ वर्ज्जयेन्मातिमा
न्विप्रःसंप्राप्तेहरिवासरइतिविष्णूक्तेः॥ दशम्यामेकभक्त
स्तुमांसमैथुनवर्ज्जितः॥एकादशीमुपवसेत्पक्षयोरुभयो
रपि ॥ देवतास्तस्यतुष्यंतिकामितंचास्यसिद्ध्यतीतिदेव
लोक्तेश्च ॥ अन्येऽपि ॥ दिनत्रयनियमानित्यव्रतेनावश्य
काः (तथाचब्रह्मवैवर्त्ते) इतिविज्ञायकुर्वीतावश्यमेकाद
शीव्रतम्॥विशेषनियमाशक्तोऽहोरात्रंभुक्तिवर्ज्जितइति॥
कात्यायनोऽपि ॥ शक्तिमांस्तुपुनःकुर्यान्नियमंसविशेष
णमिति (ब्रह्मवैवर्त्ते) प्राप्तेहरिदिनेसम्यग्विधायनिय
मंनिशि ॥ दशम्यामुपवासस्यप्रकुर्याद्वैष्णवंव्रतम् (दे
वलः) गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः ॥ उपवा
संतुगृह्णीयाद्यथासंकल्पयेद्बुधः॥औदुम्बरंताम्रमयम्॥
यथासंकल्पयेद्यथाकामंफलमुल्लिखेदित्यर्थः ॥ वारा
ह इत्युचार्य्यततो।विद्वान्पुष्पांजलिमथार्पयेत् इत्युच्चा
र्य्यसंकल्पयेत्यर्थः (कात्यायनः) अष्टाक्षरेणमंत्रेणात्रिर्ज
प्तेनाभिमंत्रितम् ॥ उपवासफलंप्रेप्सुःपिबेत्पात्रगतं
जलम् ॥ पूर्वोक्तकपालवेधेतुविशेषोनारदीये ॥ दश
म्याःसंगदोषेणअर्द्धरात्रात्परेणतु ॥ वर्ज्जयेच्चतुरोया
मान्संकल्पार्चनयोस्तदा ॥ विद्धोपवासोनेष्टोऽतोदि
नंत्यक्त्वासमाहितः ॥ रात्रौसंपूजयेद्विष्णुंसंकल्पंच

समाचरेत् ॥ पूजाप्रकारश्च (ब्राह्मे) एकादश्यांद लेयुग्मेनिराहारःसमाहितः ॥ नानापुष्पैर्मुनिश्रेष्ठवि चित्रंमंडपंशुभम् ॥ कृत्वेतिविशेषः ॥ स्नात्वासम्यग्वि धानेनसोपवासोजितेन्द्रियः ॥ संपूज्यविधिवद्विष्णुंश्र द्धयासुसमाहितः॥ पुष्पैर्गंधैस्तथाधूपैर्दीपैर्नैवेद्यकैःपरैः॥ उपचारैर्बहुविधैर्जपहोमैःप्रदक्षिणैः॥ स्तोत्रैर्नानाविधैर्दि व्यैर्गीतवाद्यमनोहरैः ॥ दण्डवत्प्रणिपातैश्चजयशब्दै स्तथोत्तमैः ॥ एवंसंपूज्यविधिवद्रात्रौकृत्वाप्रजागरम् ॥ यांतिविष्णोःपरंस्थानंनरास्त्यत्रनसंशयः (विशेषोवृह न्नारदीये) पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनम् ॥ द्वादश्यांपयसास्नाप्यहरिसारूप्यमश्नुतेइति (सूतका दौवाराहे) सूतकेचनरःस्नात्वाप्रणम्यमनसाहरिम् ॥ एकादश्यांनभुञ्जीतव्रतमेवंनलुप्यते ॥ मृतकेऽपिनभु ञ्जीतएकादश्यांसदानरइति ॥ स्त्रीणांरजोदर्शनेत्वाह माधवीये (ऋष्यश्रृंगः) संप्रवृत्तेऽपिरजसिनत्याज्यंद्वा दशीव्रतमिति ॥ एकादश्यांश्राद्धप्राप्तौत्वाहमाधवीये सएव॥ उपवासोयदानित्यःश्राद्धंनैमित्तिकंयदा ॥ उ पवासंतदाकुर्यादाघ्रायपितृसेवितामिति ॥ उपवासासा मर्थ्येत्वाह (माधवीयेमार्कंडेयः) एकभक्तेननक्तेनत थैवायाचितेनच॥उपवासेनदानेननिर्द्वादशिकोभवेत् ॥ (हेमाद्रौपुराणे)उपवासासमर्थश्चेदेकंविप्रंतुभोजयेत् ॥ तावद्धनादिवादद्याद्भुक्तश्चेद्द्विगुणंतथा ॥ सहस्रसंमि तांदेवींजपेद्वाप्राणसंयमान् ॥ कुर्याद्द्वादशसंख्याकान्य थाशक्त्यातुयोनरइति ॥ व्रताकरणेप्रायश्चित्तंस्मृत्यं

तरे ॥ अर्कपर्वद्वयेरात्रौचतुर्दश्यष्टमीदिवा ॥ एकाद
श्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति ( ज्येष्ठशुक्लैका
दशीनिर्ज्जला) ज्येष्ठेमासिनृपश्रेष्ठयाशुक्लैकादशीभवेत्॥
निर्ज्जलंसमुपोष्यात्रजलकुम्भान्सशर्करान् ॥ प्रदाय
विप्रमुख्येभ्योमोदतेविष्णुसंनिधौइतिस्कांदोक्तेः(आषा
ढशुक्लैकादश्यांविष्णुशयनंब्राह्मये एकादश्यांतुशुक्ला
यामाषाढेभगवान्हरिः॥ भुजंगशयनेशेतेक्षीरार्णवजले
सदा ( स्वापविधिर्भविष्ये ) महापूजांततःकुर्याद्देवदेव
स्यचक्रिणः ॥ जातीकुसुममालाभिर्मंत्रेणानेनपूजयेत् ॥
सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम् ॥ प्रबुद्धेचविबु
द्ध्येतचप्रसन्नोमेभवाच्युतेति ( अत्रैवचातुर्मास्यव्रतारं
भउक्तोमहाभारते ) आषाढेतुसितेपक्षेएकादश्यामु
पोषितः॥चातुर्मास्यव्रतंकुर्याद्यत्किंचिन्नियतोनरइति ॥
(व्रतानिचातुर्मास्यप्रकरणेवक्ष्यंते॥ चातुर्मास्यव्रतारंभ
स्य कालांतरमपिब्रह्मवैवर्त्ते ) एकादश्यांतुगृह्णीयात्सं
क्रांतौकर्कटस्यच ॥ आषाढ्यंतान्नरोभक्त्याचातुर्मा
स्यव्रतक्रियामिति ( व्रतग्रहणप्रकारोभविष्ये ) प्रभा
षेताग्रतोविष्णोःकृतांजलिपुटस्तथा ॥ चतुरोवार्षि
कान्मासान्देवस्योत्थापनावधि ॥ इमंकरिष्येनियम
मविघ्नंकुरुमेऽच्युत ॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव॥
निर्विघ्नंसिद्धिमायातुप्रसादात्तवकेशव ॥ गृहीतेऽस्मि
न्व्रतेदेवपञ्चत्वंयदिमेभवेत् ॥ तदाभवतुसंपूर्णंत्वत्प्रसा
दाज्जनार्दन (गार्ग्यः) नशैशवंनमौढ्यंचशुक्रगुर्वोर्न
वातिथिः॥ खंडत्वंचिंतयेच्चातुर्मास्यव्रतविधौनरइति॥

एतद्द्वितीयाद्यारंभेप्रथमारंभस्तुनभवतीतिकश्चित् ॥ त
त्तुच्छम् ॥ व्यवस्थायांमानाभावात् ॥ यदपिहेमाद्रौ ॥
( चातुर्मास्यव्रतप्रकरणेभविष्ये ) असंक्रांतंतथामासंदै
वेपित्र्येचकर्मणि ॥ मलमासमशौचंचवर्ज्जयेन्मतिमा
न्नरइति ॥ तदारंभसमाप्त्योरंतरामलमासेव्रताननुवृ
त्तिविद्ध्यर्थमितिकेचित् ॥ श्रावणेवर्ज्जयेच्छाकंदधिभा
द्रपदेत्यजेत् ॥ दुग्धमाश्वयुजेमासिकार्त्तिकेद्विदलंत्यजे
दिति ॥ श्रावणादिमासविशेषव्रताननुवृत्त्यर्थत्वम् ॥
स्पष्टमासविशेषाख्यविहितंवर्ज्जयेन्मलेइतिवचनात् ॥
चातुर्मास्यव्रतानित्वंतरामलमासेत्यनुवर्त्तंतएवेतिपरे ॥
नित्यानामारम्भः ॥ काम्यानांवर्ज्जनमितितुयुक्तम् ॥ ए
कादश्यामाशौचेत्पूर्णिमायांकर्कसंक्रांतौवाऽऽरभेत् ॥
त्रितयत्राप्याशौचेऽनारंभएव ॥ आरब्धेसूतकंनस्याद
नारब्धेतुसूतकमितिविष्णूक्तेः ॥ यत्त्वर्चनदीपिकायाम्
स्कांदे ॥ अशुचिर्वाशुचिर्वापियादिस्त्रीयादिवापुमान् ॥
व्रतमेतन्नरःकृत्वामुच्यतेसर्वपातकैरिति तदारंभोत्तरंबो
द्ध्यम् ॥ भाद्रशुक्लैकादश्यांविष्णोरंगपरिवर्त्तनंभविष्यो
त्तरे ॥ प्राप्तेभाद्रपदेमासिएकादश्यांदिनेसिते ॥ क
टिदानंभवेद्विष्णोर्महापातकनाशनमिति ॥ कटिदान
मंगपरिवर्त्तनम् ॥ कार्त्तिकशुक्लैकादश्यांदेवस्योत्थाप
नमुक्तंहेमाद्रौ ( पाद्मे ) एकादश्यांतुशुक्लायांकार्त्तिकेमा
सिकेशवम् ॥ प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वित
इति ( उत्थापनविधिर्भविष्ये ) तथैवदेवदेवस्यस्ना
नंपूर्वंमहद्भवेत् ॥ महापूजाततःकृत्वादेवमुत्थापयेत्सु

धीः ( रामार्चनचन्द्रिकायाम् ) इदंविष्णुरनेनांबुतल्पा दुत्थापयेत्प्रभुम् ( पौराणमंत्राः ) ब्रह्मेंद्ररुद्राग्निकुबेर सूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्यस्वदेवेशजगन्नि वासमंत्रप्रभावेणसुखेनदेव ॥ इयंतुद्वादशीदेवप्रबोधा यविनिर्मिता ॥ त्वयैवसर्वलोकानांहितार्थंशेषशायिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्ते जगन्नाथजगत्सुप्तंभवेदिदम् ॥ उत्थितेचेष्टतेसर्वमुत्ति ष्ठोत्तिष्ठमाधव॥गतामेघावियच्चैवनिर्मलंनिर्मलादिशः॥ शारदानिचपुष्पाणिगृहाणममकेशवेति ॥ ततस्तदग्रे व्रतंसमापयेत् ( मंत्रश्चनिर्णयामृते ) इदंव्रतंमयादेवकृ तंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जना र्दनेति ( यत्तुवाराहे ) आषाढमासेद्वादश्यांसर्वशांतिक रंशुभमित्यादिनाद्वादश्यांशयनादिकमुक्तम् ॥ तन्मिथु नार्कएव॥ आभाकाद्येषुमासेषुमिथुनेमाधवस्यच ॥द्वाद श्यांशुक्लपक्षेचप्रस्वापावर्त्तनोत्सवाइतिभविष्योक्तेः॥ त त्रैव ॥ आभाकासितपक्षेषुमैत्रश्रवणरेवती ॥ आदि मध्यावसानेषुप्रस्वापावर्त्तनोत्सवाइति ॥ रेवतीत्यत्रस समीलोपः॥ उत्सवोजागरः (मात्स्ये) निशिस्वापोदिवो त्थानंसंध्यायांपरिवर्त्तनम् ॥ निशादौनक्षत्रपादयोगा नामभावेनक्षत्रमात्रयोगोऽपिग्राह्यः ॥ पादयोगोयदा नस्याहक्षेणापितदाभवेत् (इतिवाराहपुराणात्) द्वाद श्यामृक्षसंयोगेपादयोगोनकारणमिति विष्णुधर्मोत्तरा च्च ॥ द्वादश्यामेकदेशेनापिनक्षत्रयोगाभावे ॥ एका दश्यांत्रयोदश्यांवाप्रस्वापादिकार्यम् ॥ आप्राप्तेद्वाद

शीमृक्षेउत्थानशयनेहरेः ॥ पादयोगेनकर्त्तव्येनाहोरा
त्रंविविंचितयेदिति ॥ जीमूतवाहनोदाहृतवचनात् ॥ ए
वंचद्वादश्यांनिशाद्यादरेऽन्यतिथौचनक्षत्रपादयोगादरे
नियतेसति यदाद्वादशीषुनिशादेरन्यत्रतत्तद्दक्षभागयो
गोऽन्यतिथौचतदितरनक्षत्रस्यैवयोगः ॥ तदाद्वाद
शीषुसन्ध्यायां प्रस्वापादिद्वादश्यांसंधिसमयेनक्षत्रा
णामसम्भवे ॥ आभाकासितपक्षेषुशयनावर्त्तनादि
कमिति (वाराहवचनात्संधिसमयइतिशयनादावन्वे
ति ॥ सन्धिसमयश्चसायंसन्ध्यैव ॥ रेवत्यंतोयदा
रात्रौद्वादश्यांचसमागतः ॥ तदाविबुध्यतेविष्णुर्दि
नांतेप्राप्यरेवतीमितिजीमूतवाहनवचनात् ॥ आषाढ
कार्त्तिकपौर्णमास्योरपिस्वापप्रबोधावाहयमः ॥ क्षीरा
ब्धौशेषपर्य्यङ्केआषाढ्यांसंविशेद्धरिः ॥ निद्रांत्यजति
कार्त्तिक्यांतयोःसम्पूजयेद्धरिम् ॥ ब्रह्महत्यादिकंपापं
क्षिप्रमेवव्यपोहति ॥ यत्वाषाढस्यैयंकार्त्तिकस्येयमि
तिविषयेऽप्यौत्सर्गिकानकरणेनाषाढीकार्त्तिकीपदे एं
कादशीपरेएवेति (तदुक्तम्) आषाढशुक्लपक्षान्तेभगवा
न्मधुसूदनः ॥ भोगिभोगेनिजांमायांयोगनिद्रांसमाप्नु
यात् ( इतिविष्णुधर्मोत्तरात् ) यदपिद्वादशीपदएका
दशीपरमितितदपिनप्रमाणाभावात् ॥ एतेषांचपक्षा
णांयथासम्प्रदायव्यवस्था ॥ श्रीरामस्यतुपारणोत्तरंद्वा
दशीमध्येवापूर्वरात्रौस्वापोत्सवः ॥ पारणाहेपूर्वरात्रौ
घण्टादीन्वादयन्मुहुः ॥ विधायमहतींपूजांविष्णुमभ्य
र्च्यवैष्णवामितिरामार्चनचन्द्रिकोक्तेः ॥ शिष्टास्तुसर्वदे

वानामपिपारणोत्तरमेवरात्रौकुर्वन्ति ( यत्तुमोहचूडोत्त रे ) मिथुनस्थोयदाभानुरमावास्याद्वयंस्पृशेत् ॥ दुरा षाढःसविज्ञेयोविष्णुःस्वपितिकर्कटइति ॥ तदुत्तरवर्ष गतकर्कार्कस्वापपरमितिमाधवः ॥ मेषादिमिथुनांतेषु यदादर्शद्वयंभवेत् ॥ अब्दांतरेतदावश्यंकर्कटार्केहरिः स्वपेत् ॥ कर्कटादित्रिकेचापियदादर्शद्वयंभवेत् ॥ अ ब्दांतरेतदावश्यंमिथुनार्केहरिःस्वपेदिति वराहमिहिरो क्तेः ( भविष्ये ) श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ॥ दुग्धमाश्वयुजेमासिकार्त्तिकेद्विदलंत्यजेदितिनिगमे ॥ मूलपत्रकरीराग्रफलकांडाविरूढकाः ॥ त्वक्पुष्पंवल्क लंचेतिशाकंदशविधंस्मृतमिति ॥ करीरंवंशांकुरः ॥ वि रूढकास्तिमन्यः ( द्विदलंतुस्कांदे ) माषमुद्गमसूराश्चच णकाश्चकुलत्थकाः ॥ निष्पावाराजमाषाश्चआढक्यो द्विदलंस्मृतमिति ( इत्येकादशीनिर्णयः ॥ अथद्वाद शी ) साचपूर्वा ॥ रुद्रेणद्वादशीयुक्तेतियुग्मवचनात् ॥ (माधवीयेस्कांदेऽपि ) द्वादशीचप्रकर्त्तव्याएकादश्यायु ताप्रभोइति(एकादशीपारणविषयेमाधवीयेस्मृत्यंतरे) कालद्वयंत्रयंवापिद्वादशींनत्वतिक्रमेत् ॥ पारणेमरणेनृ णांतिथिस्तत्कालिकीस्मृतेति ( अल्पद्वादश्यांविशेषः स्कांदे ) यदाभवदतीवाल्याद्वादशीपारणादिने ॥ ऊषा कालेद्वयंकुर्यात्प्रातर्मध्याह्निकंचतदिति ( तत्रकथंचि त्पारणासंभवेत्वाहदेवलः ) संकटेविषमेप्राप्तेद्वादश्यां पारयेत्कथम्॥अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृदिति संकटम् ॥ त्रयोदशीनिमित्तिकंश्राद्धस्नानदानादिकम

न्यद्वाकिञ्चित् ॥ द्वादश्यामल्पायामितिशेषः ( सर्वं थाद्वादश्यभावेतूक्तंनारदीये ) त्रयोदश्यांतुशुद्धायांपारणंपृथिवीफलम् ॥ शतयज्ञाधिकंवापिनरःप्राप्नोत्यसंशयमिति ( अत्रहरिवासररूपंतद्वर्ज्जनंचोक्तंनिर्णयामृते ॥ विष्णुधर्म्मोत्तरे ) द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः ॥ अतिक्रम्यतुकर्त्तव्यापारणाविष्णुतत्परैरिति ( चैत्रशुक्लद्वादश्यांदमनकार्पणमुक्तमगस्तिसंहितायाम् ) द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः ॥ बौद्धायनादिभिःप्रोक्तःकर्त्तव्यःप्रतिवत्सरम् ( तत्रप्रथमेदेवप्रार्थना ) क्रियालोपविघातार्थेयत्त्वयाविहितंप्रभो ॥ नमेविघ्नोभवेदत्रकुरुनाथदयांमयि ॥ सर्वथासर्वदाविष्णोममत्वंपरमागतिः ॥ उपवासेनत्वांदेवतोषयामिजगत्पते ॥ कामक्रोधादयोयेतेनमेस्युर्व्रतघातकाः ॥ अद्यप्रभृतिदेवेशयावद्वैशेषिकांदिनम् ॥ तावद्रक्षात्वयाकार्यासर्वस्यास्यनमोस्तुते ॥ एवंविज्ञाप्यदेवेशंगुरुपादौप्रणम्यच ॥ प्रातःस्नात्वासमभ्यर्च्यदेवेशंविधिवन्नरः ॥ गच्छेद्दमनकाराममेकादश्यांसुशोभितम् ॥ क्रमेणादायतत्रैवपूजयेच्चंदनादिना ॥ नेष्यामिराजपूजार्थमितिसंप्रार्थ्यतन्नमेत् ॥ उत्पाद्यपञ्चगव्येनप्रोक्ष्यप्रक्षाल्यवारिणा ॥ धौतेनवाससाऽऽच्छाद्यनिधायपटलेनवे ( पटलेवंशादिपात्रे ) घंटापुरुषसूक्तादिस्वनैःस्वगृहमानयेत् ॥ ततोगृहमागत्यदेवंप्रार्थयेत् ॥ आमंत्रितोऽसिदेवेशपुराणपुरुषोत्तम ॥ प्रातस्त्वांपूजयिष्यामिसान्निध्यंकुरुकेशव ॥ क्षीरोदधिमहानागश

च्यासंस्थितविग्रह ॥ प्रातस्त्वांपूजयिष्यामिसन्निधौभ
वतेनमः ॥ निवेदयाम्यहंतुभ्यंप्रातर्दमनकंशुभम् ॥ स
र्वथासर्वदाविष्णोनमस्तेऽस्तुप्रसीदमे ॥ इत्थमामंत्र्य
दत्त्वाथतस्मैपुष्पांजलिंपुनः ॥ पूजितंतंदमनकंकुंभस्यो
परिसंस्थितम् ॥ अस्त्रेणसर्वतोरक्षेत्कवचेनावगुंठयेत्॥
रक्षेद्वाचक्रमंत्रेणनृहरेर्मनुनाथवा ॥ ततोब्राह्मणान्गुरू
न्प्रणम्यगीतवाद्यादिभीरात्रौजागरणंकुर्यात् ॥ ततः
प्रातरुत्थायस्नानाद्याह्निकंनित्यपूजांचकृत्वा नैमित्तिकं
कुर्यात् ( तद्यथा ) पूर्वदिनाधिवासितंदमनकंदूर्वादलस
हितंगृहीत्वा ॥ ॐदेवदेवजगन्नाथवांछितार्थप्रदायक ॥
हृदिस्थान्पूरयकामान्ममकामेश्वरीप्रिय ॥ इदंदमन
कंदेवगृहाणमध्यनुग्रहात् ॥ इमांसांवत्सरींपूजांभगव
न्परिपूरयेति ॥ मूलमंत्रसंपुटितेनमंत्रेणदेवायदमनकं
समर्पयेत् ॥ ततउत्तरंप्रार्थना ॥ मणिविद्रुममालाभि
र्मंदारकुसुमादिभिः ॥ इयंसांवत्सरीपूजातवास्तुगरुड
ध्वज ॥ वनमालांतथादेवकौस्तुभंसततंहृदि ॥ तद्वद्दम
नकींपूजांमालांचहृदयेवह ॥ जानताऽजानतावापिनकृ
तंयत्तवार्चनम् ॥ तत्सर्वंपूर्णतांयातुत्वत्प्रसादाद्रमापते ॥
जितंतेपुण्डरीकाक्षनमस्तेविष्णुभावन ॥ नमस्तेस्तुहृ
षीकेशमहापुरुषपूर्वज ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनं
जनार्दन ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमेइति ॥
देवंप्रार्थयित्वादंडवत्प्रणम्यभूषणवस्त्रादिभिर्गुरुं संपूज्य
नत्वाब्राह्मणान्भोजयेत्स्वयंचपारणंकुर्यात् (इतिदमन
कारोपणम् ) पारणाहेद्वादश्यलाभेतत्रैव ॥ पारणाहे

नलभ्येतद्वादशीघटिकापिवा (माधवेवैशाखे) तद्द्वा
दश्यामित्यर्थः ॥ नागेपञ्चम्याम् (ज्येष्ठशुक्लद्वादश्यां
वटसावित्रीव्रतारम्भउक्तोभविष्ये) ज्येष्ठेमासिसितेप
क्षेद्वादश्यांरजनीमुखे ॥ वृतंत्रिरात्रमुद्दिश्यदिवारात्रि
स्थिराभवेदिति ॥ आषाढशुक्लद्वादश्यांतप्तमुद्राधारण
मथर्वणश्रुतौ ॥ तद्विष्णोःपरमंपदंयेगच्छंतिहिलांछिता
इति (नारदीयेऽपि) अग्निनैवतुसंयुक्तंचक्रमादायवैष्ण
वः॥धारयेत्सर्वगात्राणांविष्णुसायुज्यमश्नुतइति।तच्छू
द्रविषयम्।नब्राह्मणादेः॥ यथाश्मशानजंकाष्ठमनर्हंसर्व
कर्मसु ॥ तथाचक्रांकितोविप्रःसर्वकर्मसुगर्हितइति ॥
(आश्वलायनोक्तेः) द्विजंतुतप्तमुद्रादिलिंगांकिततनुंन
रः ॥ संभाष्यरौरवंयातियावदिंद्राश्चतुर्दशेति (नार
दीयात् ॥ तथा) शंखचक्रंमृदायस्तुकुर्यात्तप्तायसेनवा ॥
सशूद्रवद्बहिःकार्यःसर्वस्माद्विजकर्मणइति (शैवपुराणेऽ
पि) शंखचक्राद्यंकनंचगीतनृत्यादिकंतथा ॥ एकजाते
रयंधर्मोनजातुस्याद्विजन्मनइति ॥ एतेषांचाविधानेनि
षेधानांवैष्णवावैष्णवपरतयाव्यवस्थेतिकेचित् ॥ बहव
स्तुद्विविधानामपिनिर्मूलतामाहुः (श्रावणशुक्लद्वाद
श्यांपवित्रारोपणमुक्तंरामार्चनचंद्रिकायाम्) श्रावण
स्यसितेपक्षेद्वादश्यांशौनकादिभिः ॥ उक्तःसदाप्रकर्त्त
व्यापवित्रारोपणोत्सवः (पाद्मे) ऊर्जेव्रतंमधौदोलां
श्रावणेतन्तुपूजनम् ॥ चैत्रेचदमनारोपंनकुर्वाणोव्रज
त्यधः ॥ पवित्रारोपणंविघ्नाच्छ्रावणेनभवेद्यदि ॥ का
र्त्तिक्यवधिशुक्लार्केकर्त्तव्यमितिनारदः ॥ शुक्लार्कशुक्लद्व

दशी ॥ हेमरूप्यमयैस्सूत्रैस्तथाकौशेयपद्मजैः ॥ कुशैःकासै श्चकार्पासैर्ब्राह्मण्याकार्त्तितैःशुभैः ॥ कन्ययावापवित्रंस्या न्नपौंश्चल्यादिभिःकृतैः ॥ स्नात्वात्रिगुणितंसूत्रंत्रिगुणीकृ त्यशोधयेत् ॥ पृथक्पृथक्पञ्चगव्यैरद्भिःप्रक्षालयेत्ततः ॥ मूलेनाष्टोत्तरशतंगायत्र्यारामसंज्ञया ॥ शङ्खोदकेनाभि मंत्र्यपवित्राणिविनिर्ममेत् ॥ तत्रोत्तमंपवित्रंतुषष्ठ्यासह स्रशतैस्त्रिभिः ॥ सप्तत्यासंहितंद्वाभ्यांपावित्रंमध्यमंस्मृत म् ॥ साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् ॥ अष्टोत्तरंतद र्द्धार्द्धंनवसूत्रीकृतेनच ॥ जानूरूनाभिपर्यंतमुत्तमादित्र यंभवेत् ॥ अष्टोत्तरसहस्रेणाविंशोत्तरयुतशतेनसप्तत्या वावनमाला ॥ शतपञ्चाशत्षड्त्रिंशद्ग्रन्थिभिरुत्तमा दिः षड्त्रिंशच्चतुर्दशद्वादशभिरितिकेचन ॥ चतुर्विंशद्वाद शाष्टाभिरित्येके ॥ अंगुष्ठपर्वतदर्द्धपरिमितोग्रन्थिरुत्त मादिः ॥ स्नात्वाविज्ञापयेद्देवम् ॥ क्रियालोपावितना र्थंयत्त्वया विहितंविभो ॥ मयैतत्क्रियतेदेवतवतुष्ट्यैपावि त्रकम् ॥ नमेविघ्नोभवेदत्रकुरुनाथदयांमयि ॥ सर्वथा सर्वदाविष्णोममत्वंपरमागतिः ॥ उपवासेनत्वांदेवतो षयामिजगत्पते ॥ कामक्रोधादयोयेतेनमेस्युर्व्रतघात काः ॥ अद्यप्रभृतिदेवेशयावद्वैशेषिकंदिनम् ॥ तावद्र क्षात्वयाकार्यासर्वस्यास्यनमोऽस्तुते ॥ कुम्भंपुण्याम्बु नापूर्यसर्वतोभद्रकेशुभे ॥ स्थापयेत्पुरुतोविष्णोस्तत्र सूत्राणिपूजयेत् ॥ सांवत्सरस्ययागस्यपवित्रीकरणा यभो ॥ विष्णुलोकात्पवित्रायआगच्छेहनमोऽस्तुते ॥ सर्वाभरणाचित्रांगसर्वदेवनमस्कृत ॥ लावण्यरूपमरूप

न्नसर्वकर्त्तःप्रजायते॥ सर्वात्मन्निति सूत्रेऽस्मिन्सांनिध्यं कुरुतेनमः ॥ सर्वरत्नोज्ज्वलाकारब्रह्माण्डब्रह्मरोचिषः॥ मुकुटोत्तमसर्वाङ्गशिरःसूत्रद्रुहैर्विभो ॥ इहतेजगतःकीर्त्तिःसर्वलावण्यदायिनी ॥ श्रीसूत्रनित्यकल्पानांसांनिध्यंकुरुतेनमः ॥ मनुभिर्मन्त्रयेदेतैःपूजयेन्मूलमन्त्रतः ॥ अथदेवकरेविद्वान्गन्धसूत्रसमुद्भवम् ॥ वितस्तिमानकंडोरंबध्नीयान्मङ्गलात्मकम् ॥ संवत्सरकृताचर्य्यासम्पूर्णफलदाऽस्तुते॥ पवित्रारोपणेचैवसांनिध्यं कुरुतेनमः ॥ विष्णुतेजोद्भवंरम्यंसर्वपातकनाशनम् ॥ सर्वकामप्रदंदेवतवाङ्गेधारयाम्यहमितिमन्त्रः ॥ नीराजयेत्ततोदेवंमंगलाघोषपूर्वकम् ॥ मन्त्रेणाथसुरेशानं देवदेवंतुमन्त्रयेत् ॥ आमन्त्रितोऽसिदेवेशपुराणपुरुषोत्तम ॥ प्रातस्त्वांपूजयिष्यामिसांनिध्यंकुरुकेशव ॥ क्षीरोदधिमहानागशय्याऽवस्थितविग्रह ॥ प्रातस्त्वां पूजयिष्यामिसंनिधौभवतेनमः ॥ निवेदयाम्यहंतुभ्यं प्रातरेतत्पवित्रकम् ॥ सर्वथासर्वदाविष्णोनमस्तेऽस्तु प्रसीदभो ॥ नियतेदण्डवद्भूमौक्षिप्त्वापुष्पाञ्जलिंततः ॥ ब्राह्मणेभ्योनमस्कृत्यगुरुपादौप्रणम्यच ॥ गीतमङ्गलनिर्घोषैःकुर्य्याज्जागरणंततः (इत्यधिवासनम्) अपरेद्युर्नित्यपूजांविधाय ॥ ततोमंगलनिर्घोषैःशङ्खतुर्यादिनिस्स्वनैः ॥ गन्धदूर्वाक्षतैर्युक्तंदद्याद्देवायसूत्रकम् ॥ पवित्रीकरणार्थायवर्षपूजाफलप्रदम् ॥ पवित्रंच कुरुष्वाद्ययन्मयादुष्कृतंकृतम् ॥ शुद्धोभवाम्यहंदेवत्वत्प्रसादात्सुरेश्वर ॥ मूलसम्पुटितेनैकपवित्रारोपणे

मनुः ॥ अंगाद्यावृत्तिदेवेभ्यस्ततोदद्यात्स्वनामभिः ॥ नैवेद्यंतुमहापूर्वंततोभक्त्याचभक्तितः ॥ नीराजयेत्ततोदेवंरमाकांतंसुमंगलम् ॥ संवीज्यचामरैःपुरयैर्दर्पणंदर्शयेत्ततः ॥ प्रार्थयेद्देवदेवेशंमन्त्रैरेभिर्यथाविधि ॥ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ इयंसांवत्सरीपूजातवास्तुगरुडध्वज ॥ वनमालांयथादेवकौस्तुभंसततंहृदि ॥ तद्वत्पवित्रांपूजांचहृदयेवहकेशव॥ जानताऽजानतांवापियत्कृतंतुत्वदर्चनम् ॥ केनचिद्विघ्नदोषेण परिपूर्णंतदस्तुमे ॥ मन्त्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ अपराधसहस्राणिक्रियन्तेऽहर्निशंमया॥ दासोऽयमितिमांमत्वाक्षमस्वमधुसूदन ॥ ततःपवित्रंगुरवेदद्याद्गन्धादिपूर्वकम्॥ अनेनपूजयेद्भक्त्यास्वर्णवस्त्रानुलेपनैः॥ ब्राह्मणान्वैष्णवांश्चैवगन्धपुष्पादिनाऽर्चयेत् ॥ मासंपक्षमहोरात्रंत्रिरात्रन्धारयेत्तथा ॥ देवेतंसूत्रसन्दर्भन्देशकालविचक्षणः ॥ प्रत्यहंस्नानकार्याणिसूत्रमुत्तीर्य्यकारयेत् ॥ अथान्तेदेवमभ्यर्च्यततःसूत्रंविसर्जयेत् ॥ सांवत्सरींशुभांपूजांसम्पाद्यविधिवन्मम ॥ व्रजेदानींपवित्रत्वंविष्णुलोकविवर्जितम् ॥ यावद्देवपवित्राणितावत्तिष्ठेत्समाहितः॥ ब्रह्मचारीहविष्याशीदेवपूजापरायणः ( भाद्रशुक्लद्वादशीश्रवणद्वादशीसाचैकादशीयुतैव ॥ तदुक्तंमात्स्ये) द्वादशीश्रवणंस्पृष्ट्वास्पृशेच्चैकादशींयदि ॥ स एववैष्णवोयोगोविष्णुशृङ्खलसंज्ञितः ॥ तस्मिन्नुपोष्यविधिवन्नरःसंक्षीणकल्मषः ॥ प्राप्नोत्यनुत्तमांसिद्धिंपु

नरावृत्तिदुर्लभामिति (द्वादश्यांश्रवणाभावेतुनारदीये) यदानप्राप्यतेऋक्षंद्वादश्यांवैष्णवंक्वचित् ॥ एकादशी तदोपोष्यापापघ्नीश्रवणान्वितेति॥ विधिलोपएकादशी पारणहानिकृतः (अशक्तौतुमात्स्ये) द्वादश्यांशुक्लपक्षेतु नक्षत्रंश्रवणंयदि ॥ उपोष्यैकादशींतत्रद्वादश्यांपूजये द्धरिमिति ( अत्रकृत्यमुक्तंभविष्योत्तरे ) मासिभाद्रपदे शुक्लाद्वादशीश्रवणान्विता ॥ सर्वकामप्रदापुण्याउपवा सेमहाफला ॥ सङ्गमेसरितांस्नात्वाद्वादशींसमुपोषि तः ॥ समग्रंसमवाप्नोतिद्वादशद्वादशीफलम् ( विष्णु धर्मोत्तरे ) यारामश्रवणोपेताद्वादशीमहतीतुसा ॥ त स्यामुपोषितःस्नात्वापूजयित्वाजनार्दनम् ॥ प्राप्नोत्यय त्नाद्धर्मज्ञोद्वादशद्वादशीफलम् ॥ दध्योदनयुतन्तस्या ञ्जलपूर्णंघटंद्विज ॥ वस्त्रसंवेष्टितन्दत्त्वाछत्रोपानहमेव च ॥ नदुर्गतिमवाप्नोतिगतिमग्र्याञ्चविन्दति ॥ अक्ष य्यस्थानमाप्नोतिनात्रकार्याविचारणेति ( पारणेतुविशे षोनारदीये) तिथिनक्षत्रयोगेतुउपवासोयदाभवेत् ॥पा रणन्नतुकर्त्तव्यंयावन्नैकस्यसंक्षयइति ( अत्रवरुणासङ्ग मेस्नानमुक्तंलैङ्गे) अतःपरन्तुसंसेव्योगङ्गावरुणसङ्गमः॥ श्रवणद्वादशीयोगेबुधवारोयदाभवेत्॥ तदातास्मिन्नरः स्नात्वासन्निहत्यफलंलभेदिति ( कार्त्तिककृष्णवत्सद्वा दशी ॥ सापूर्वविद्धा ) रुद्रेणद्वादशीयुक्तेतियुग्मवा क्यात् ॥ वत्सपूजावटश्चैवकर्त्तव्याप्रथमेहनीतिस्मृत्य न्तराच्च (भविष्यपुराणे ) सवत्सांतुल्यवर्णांचशीलिनी ङ्गाम्पयस्विनीम् ॥ चन्दनादिभिरालिप्यपुष्पमालाभि

रर्चयेत् ॥ अर्घ्यन्ताम्रमयेपात्रेकृत्वापुष्पाक्षतैस्तिलैः ॥ पादमूलेतुदद्याद्वैमंत्रेणानेनपाण्डव ॥ क्षीरोदार्णवसम्भूतेसुरासुरनमस्कृते ॥ सर्वदेवमयेमातर्गृहाणार्घन्नमो नमः ॥ ततोमाषादिसंसिद्धान्वटकान्विनिवेदयेत् ॥ सुरभित्वञ्जगन्मातर्देविविष्णुपदेस्थिता ॥ सर्वदेवमये ग्रासंमयादत्तमिमंग्रस ॥ ततःसर्वमयेदेवीसर्वदेवैरलंकृते ॥ मातर्ममाभिलषितंसफलंकुरुनन्दिनि इतिप्रार्थयेत् ॥ तत्रैव ॥ तद्दिनेतैलपक्कञ्चस्थालीपक्कंयुधिष्ठिर ॥ गोक्षीरञ्चघृतञ्चैवदधितक्रञ्चवर्ज्जयेदिति (अत्रैवद्वादश्यादिषुविशेषोनारदीये, आश्विनेकृष्णपक्षेतुद्वादश्यादिषुपञ्चसु । तिथिषूक्तःपूर्वरात्रेनृणांनीराजनाविधिः॥ नीराजयेयुर्देवाँस्तुविप्रान्गाश्चतुरङ्गमान् ॥ ज्येष्ठान्श्रेष्ठान्जघन्याँश्चमातृमुख्याश्चयोषितइति (अयञ्चाश्विनामावास्यान्तः॥ कार्त्तिकशुक्लद्वादश्यांचातुर्मास्यव्रतसमाप्तिरुक्ताभारते ) चतुर्द्धागृह्यवैचीर्णञ्चातुर्मास्यव्रतन्नरैः ॥ कार्त्तिकेशुक्लपक्षेतुद्वादश्यान्तत्समापयेदिति (मंत्रस्तु ) इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो ॥ न्यूनसम्पूर्णतांयातुत्वत्प्रसादाज्जनार्द्दनेति (अथसर्वद्वादशीकृत्यन्तन्नियमञ्चकात्यायनः ) प्रातःस्नात्वाहरिम्प्राच्र्य उपवासंसमर्पयेत् ॥ अज्ञानतिमिरान्धस्यव्रतेनानेनकेशव । प्रसादसुमुखोनाथज्ञानदृष्टिप्रदोभव ॥ पारणन्तु ततःकुर्याद्यथासम्भवमार्गतइति ( बृहन्नारदीये ) ब्राह्मणान्भोजयेच्छक्त्याप्रदद्याद्दक्षिणांतथा ॥ ततःस्वबन्धुभिःसार्द्धन्नारायणपरायणः ॥ कृतपञ्चमहायज्ञःस्वयम्भुं

जीतवाग्यतःइति (भोजनेतुविशेषःस्कान्दे) कृत्वाचै
वोपवासन्तु योऽश्नातिद्वादशीदिने ॥ नैवेद्यन्तुलसी
मिश्रंहत्याकोटिविनाशनमिति (तत्रवर्ज्यानिब्रह्माण्डे)
कांस्यंमांसंसुरांक्षौद्रंलोभंवितथभाषणम् ॥ व्यायामंच
प्रवासंचदिवास्वापमथांजनम् ॥ तिलपिष्टंमसूरंचद्वादशै
तानिवैष्णवः ॥ द्वादश्यांवर्ज्जयेन्नित्यंसर्वपापैःप्रमुच्य
ते ॥ तथा ॥ कांस्यंमांसंसुरांद्यूतंव्यायामंक्रोधमैथुने
हिंसामत्यंतलौल्यंचतैलनिर्माल्यलंघनम् ॥ द्वादश्यां
द्वादशैतानिवैष्णवःपरिवर्ज्जयेत् (बृहस्पतिरपि) दिवा
निद्रांपरान्नंचपुनर्भोजनमैथुने ॥ क्षौद्रंकांस्यामिषेतैलं
द्वादश्यामष्टवर्ज्जयेत् (कात्यायनः) द्वादश्यांपारणंकु
र्याद्वर्ज्जयित्वाह्युपोदकमित्यादिसर्वंचैतत्काम्यव्रतपरम्।
पुनर्भोजनमध्वान्नंभारमायासमैथुने ॥ उपवासफलंह
न्युर्दिवानिद्राचपञ्चमी ॥ तथा ॥ कांस्यंमांसंमसूरंच
चणकंकोरदूषकाः ॥ शाकंमधुपरान्नंचहन्युरष्टा विमेफ
लमित्यादौफलग्रहणात् ॥ स्कांदे ॥ कलाद्वयंत्रयंवा
पिद्वादशीयत्रदृश्यते ॥ स्नानार्चनादिकंकर्मतदारात्रौ
विधीयते ॥ अरुणोदयपरश्चात्ररात्रिशब्दः (तथाचना
रदीये ) अल्पायामथविप्रेंद्रद्वादश्यामरुणोदये ॥ स्ना
नार्चनक्रियाःकार्याजपहोमादिसंयुताइति ॥ होमादि
शब्देनचात्रस्मार्त्तमेवकर्मगृह्यतेनतुश्रौतम् ॥स्मृत्याश्रौ
तकालबाधायोगात् ॥ (पाद्मेऽपि) यदाभवतिचाल्पातु
द्वादशीपारणादिने ॥ उषःकालेद्वयंकुर्यात्प्रातर्मध्याह्नि
कंतदेति ॥ महाहानिकरीह्येषाद्वादशीलंघितानरैः ॥

करोतिधर्महरणमस्नातेवसरस्वतीति ॥ भूयस्यामपि द्वादश्यांमध्याह्निकापकर्षोभवत्येव ॥ सर्वेषामुपवासानांप्रातरेवहिपारणमित्युक्तेः ॥ भोजनमध्याह्निकयोश्च वाचिकमात्रसद्भावात् ॥ एवमुक्तनियमलोपेयमः ॥ मानसेनियमेलुप्तेस्मरेद्विष्णुमनामयमिति (याज्ञवल्क्यः) प्रतिवाग्यमलोपःस्यात्स्नानदानादिकर्मसु ॥ व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययमिति (विष्णुधर्मोत्तरे) असंभाष्यांहिसंभाष्यतुलसीतुलसिकादलम् ॥ आमलक्याःफलंवापिपारणेप्राप्यशुद्ध्यति॥ इदंचोदाहरेत्सम्यक्कृत्वातत्प्रवणंमनः॥ शारीरमंतष्करणोपघातंवाचश्च विष्णुर्भगवानशेषम् ॥ शमंनयत्वस्तुममेहशर्मपापादनंतेहृदिसंनिविष्टे ॥ अन्तःशुद्धिंबहिःशुद्धिंशुद्धोधर्ममयोऽच्युतः ॥ सकरोतुममैतस्मिन्शुचिरेवास्मिसर्वदा ॥ बाह्योपघातानन्घान्बौद्धांश्चभगवानजः ॥ शमंनयत्वनन्तात्माविष्णुश्चेतसिसंस्थितः ॥ एतत्संभाष्यजप्तव्यंपाखण्डिभिरुपोषितैरिति (वैष्णवे) तस्यावलोकनात्सूर्यपश्येच्चमतिमान्नरः॥ नमःशुचिषदेत्युक्त्वेति॥ तस्यपाखण्डादेस्तत्स्पर्शेऽपितत्रैव ॥ संस्पर्शेतुबुधःस्नात्वाशुचिरादित्यदर्शनादिति (विष्णुरहस्ये) श्राद्धोपवासदिवसेकृत्वातुदन्तधावनम् ॥ गायत्र्याशतसंपूतमम्बुप्राश्यविशुद्ध्यतीति॥ रजस्वलांचचंडालंमहापातकिनंतथा ॥ सूतिकांपतितंचैवउच्छिष्टरजकादिकामित्युपक्रम्य (बृहन्नारदीये) व्रतादिमध्येशृणुयाद्येषांध्वनिमुत्तमः॥ अष्टोत्तरसहस्रंतुजपेद्वेदमातरम् (वेदमातागायत्री)का

स्यायनः॥ मिथ्यापवादेदिवास्वापेबहुशोम्बुनिषेवणे॥ अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिरिति(अष्टाक्षरम्) ॐनमोनारायणायेति॥ शंखः॥ कृत्वास्तेयंप्राणिहिंसांयथार्हंशास्त्रचोदितम्॥ प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयमिति (पैठीनसिः) तांबूलचर्वणेस्त्रीणांभोगेमांसनिषेवणे॥ व्रतलोपोभवेत्कुर्यादष्टाक्षरमनोर्जपमिति(कात्यायनः )रेतःसंक्रमणेस्त्रीणांभोगेऽन्यत्रक्षयस्मृतः॥ जपोऽष्टाक्षरमंत्रस्यनाम्नांशतत्रयस्यवेति॥ रेतःसंक्रमणमृतुकालगमनम्॥ तदात्मकात्स्त्रीसंभोगादन्यत्रसंभोगेव्रतस्यक्षयइत्यर्थः॥ देवलोऽपि॥नदारेष्वृतुसंगमादिति(इतिद्वादशीनिर्णयः) (अथत्रयोदशी)॥ सातुशुक्लापूर्वाकृष्णोत्तराग्राह्या॥ शुक्लत्रयोदशीपराकृष्णात्रयोदशीतिमाधवोक्तेः (दीपिकायामपि) त्रयोदशीतिथिःपूर्वासितेऽथासितेपरश्चादिति (अत्रप्रदोषव्रतंब्रह्मोत्तरखण्डे) पक्षद्वयेत्रयोदश्यांनिराहारोभवेद्दिवा॥ घटिकात्रिरस्तसमयात्पूर्वंस्नानंसमाचरेत्॥ शुक्लाम्बरधरोभूत्वावाग्यतोनियमान्वितः॥ कृतसन्ध्याजपविधिःशिवपूजांसमारभेत, इति (अत्रप्रदोषव्यापिनीग्राह्या) तत्रैवपूजाविधानात्॥ दिनद्वयेप्रदोषव्यापित्वेऽव्यापित्वेवापूर्वैव (तथाचसुमन्तुः) त्रयोदशीतुकर्त्तव्याद्वादशीसहितामुनेइति॥ इदंचकृष्णपक्षेमन्दवासरेप्रशस्तम्॥ मन्दवारेप्रदोषेऽयंदुर्लभःसर्वदेहिनाम्॥ तत्रापिदुर्लभस्तस्मिन्कृष्णपक्षेसमागतेइति॥ तत्रैवोक्तत्वात्॥ चैत्रकृष्णत्रयोदश्यामलभ्ययोगः (स्कांदे) वा

रुणेनसमायुक्तामधौकृष्णत्रयोदशी ॥ गङ्गायांयादि लभ्येतसूर्यग्रहशतैःसमा ॥ शनिवारसमायुक्तासाम हावारुणीस्मृता ॥ शुभयोगसमायुक्ताशनौशतभिषा यदि ॥ महामहेतिविख्यातात्रिकोटिकुलमुद्धरेत् ॥ ति थिकृत्येचकृष्णादिव्रतेशुक्लादिरेवच ॥ ब्राह्मोक्तेरत्रकृ ष्णादिर्मासः ॥ नचास्यव्रतत्वम् ॥ व्रतपदंतत्प्रकरणा द्यभावात् (कार्त्तिककृष्णत्रयोदश्यांदीपदानमुक्तंचन्द्र प्रकाशेस्कांदे) कार्त्तिकस्यासितेपक्षेत्रयोदश्यांनिशामु खे ॥ यमदीपंवहिर्दद्यादपमृत्युर्विनश्यतीति ॥ वहिर्ग्रा माद्वाहिरितिकेचित् ॥ गृहाद्वाहिरित्यपरे (मन्त्रस्तु) मृ त्युनापाशदण्डाभ्यांकालेनश्यामयासह ॥ त्रयोदशीदी पदानात्सूर्य्यजःप्रीयतांममेतिदिक् (इतित्रयोदशी ॥ अथचतुर्दशी) सातुकृष्णापूर्वाशुक्लोत्तराग्राह्या ॥ चतुर्द श्याचपूर्णिमेतियुग्मवाक्यात् ॥ तृतीयैकादशीषष्ठीशुक्ल पक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुतेति (नारदीयात्) कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धातुकर्त्तव्यापरविद्धानकर्हिचित् इति॥ आपस्त म्बोक्तेश्च ॥ तत्रसर्वासुचतुर्दशीषुवीरेश्वरपूजोक्ता (स्कांदे) विधायैवंजागरणंनरोवीरंसमाचरेत् ॥ भूता यांनैवगृह्णातिशरीरंपांचभौतिकम् (चैत्रकृष्णचतुर्द श्यांकेदारकुण्डोदकपानमुक्तंतत्रैव) चैत्रकृष्णचतुर्द श्यामुपवासंविधायच ॥ केदारोदकपानेनयथातत्रफ लंलभेत, इति ॥ चैत्रशुक्लचतुर्दशीरात्रिव्यापिनीग्राह्ये तिकेचित् ॥ मधोःश्रावणमासस्ययातुशुक्लाचतुर्दशी ॥

सारात्रिव्यापिनीग्राह्यापरापूर्वाह्णगामिनीति बौद्धायन वचनात् ॥ निशिभ्रमन्तिभूतानिशक्तयःशूलभृद्यतः ॥ अतस्तत्रचतुर्दश्यांसत्यांतत्पूजनंभवेत् ॥ (इतिब्रह्मवैवर्त्तोक्त) तातचरणास्तु ॥ तृतीयैकादशीषष्ठीशुक्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुतेति ॥ नारदेनशुक्लचतुर्दशीपरविद्धोक्ता ॥ कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धातुकर्त्तव्यापरविद्धानकर्हिचिदिति ॥ आपस्तम्बेनचकृष्णापूर्वोक्ता ॥ अपराह्णव्यापित्वेतूभेऽपिपूर्वविद्धेएव ॥ चतुर्दशीतुकर्त्तव्यात्रयोदश्यायुताविभो ॥ ममभक्तैर्महाबाहोभवेद्याचापराह्णिकेति ॥ दर्शविद्धानकर्त्तव्याराकाविद्धाकदाचनेति स्कांदोक्तेः ॥ मधोःश्रावणमासस्येतिबौद्धायनीयेतुपरापूर्वाह्णगामिनीत्येवविधीयते ॥ नरात्रिव्याप्ताग्राह्येत्यपि ॥ उभयविधौवाक्यभेदप्रसंगात् ॥ किन्तुस्कांदवाक्यप्राप्तपूर्वविद्धत्वमनूद्यते ॥ तद्धिरात्रिव्यापित्वएवभवति ॥ रात्रिव्यापिनीविधिः ॥ पूर्वाह्णगामिनीत्यनुवादइतिचेन्न ॥ मधुश्रावणशुक्लचतुर्दशीभिन्नानांपूर्वाह्णव्यापिनीनांग्रहणस्याप्राप्तेः ॥ अतोलक्षणयारात्रिव्यापिनीत्यनेनपूर्वविद्धत्वमनूद्यते इत्याहुः ॥ रात्रिव्यापिनीत्येतत्पूर्वविद्धापरंतच्चसायाह्नव्यापित्वेभवति ॥ पूर्वविद्धाचरात्रिव्यापिन्येवभवति ॥ एवंचपूर्वविद्धत्वेपरविद्धत्वेवाप्राप्तेमधोः श्रावणमासस्येतिवचोनियमविधिर्भवति ॥ पूर्वविद्धत्वाभावेकेवलंरात्रिमात्रव्यापित्वेत्वपूर्वविधित्वंस्यात्तत्वनियम विधेर्गुर्वितिशास्त्रसिद्धंसारा

त्रिव्यापिनीत्येतत्पूर्वविद्धापरमितिममप्रतिभाति ॥ अ
स्यामेवपशुपतीश्वरपूजोक्तातत्रैव॥ चैत्रशुक्लचतुर्दश्यामु
पोषणपरायणः ॥ पूजयित्वापशुपतिंरात्रौजागरणंतथे
ति। वैशाखशुक्लचतुर्दशीनृसिंहजयंती। तदुक्तंगोविंदा
र्णवे(ब्राह्मे)शुक्लपक्षेचतुर्दश्यांमासिमाधवसंज्ञके॥ प्रादु
र्भूतोनृपंचास्यस्तस्मात्तांसमुपोषयेदिति ॥ माधवोवै
शाखः॥ नृपंचास्योनृसिंहः ॥ इयंचप्रदोषव्यापिनीग्रा
ह्या॥ वैशाखस्यचतुर्दश्यांसोमवारेऽनिलर्क्षके॥ अवता
रोनृसिंहस्यप्रदोषसमयेद्विजइतिस्कांदात् ॥ अनिलर्क्षं
स्वाती॥ दिनद्वयेप्रदोषप्राप्तावव्याप्तावेकदेशसमव्या
प्तौचपरा ॥ अनंगेनसमायुक्तानसोपोष्याचतुर्दशी ।
धनापत्यैर्वियुज्येत तस्मात्तांपरिवर्जयेदितितत्रैवनिषेधा
त्॥ वैषम्येणैकदेशयोगेआधिक्यमतीवप्रशस्तम् ॥ अ
त्रैवोंकारेश्वरयात्राद्युक्तंकाशीखण्डे ॥ राधशुक्लचतुर्द
श्यामप्यापिक्षेत्रवासिनः ॥ तत्रयात्रांप्रकुर्वीतमहोत्स
वपुरःसराम्॥ तत्रजागरणंकृत्वाचतुर्दश्यामुपोषिताः॥
प्राप्नुवंतिपरंस्थानंयत्रकुत्रापितेमृताः ॥ ब्रह्मांडोदरम
ध्येतुयानितीर्थानिसर्वतः ॥ तानिवैशाखभूतायामाग
त्योंकृतिदर्शनेइति (भाद्रशुक्लचतुर्दश्यामनंतव्रतम्)
तत्रोदयव्यापनीग्राह्या ॥ तथाभाद्रपदस्यांतेचतुर्दश्यां
द्विजोत्तम ॥ पौर्णमास्यांसमायोगेव्रतंचानंतकंचरेदि
तिगोविंदार्णवभविष्योक्तेः ॥ मुहूर्त्तमपिचेद्भाद्रेपौर्णमा
स्यांचतुर्दशी ॥ संपूर्णांतांविदुस्तस्यांपूजयेद्विष्णुमव्य
यमितिस्कांदाच्च ॥ मुहूर्त्तमपीतित्रिमुहूर्त्तंचसापरम् ॥

माधवोप्येवम् ॥ दिनद्वयेउदयव्यापित्वेसंपूर्णत्वात्पूर्वैव (कार्त्तिककृष्णचतुर्दशीनरकचतुर्दशी) तत्रचंद्रोदयेअभ्यंगःकार्यः ॥ तदुक्तंहेमाद्रौभविष्ये ॥ अश्वयुक्कृष्णपक्षस्यचतुर्दश्यांविधूदये ॥ तिलतैलेनकर्त्तव्यंस्नानंनरकभीरुणेति ॥ अश्वयुक्तंचामावास्यांमासाभिप्रायेण ॥ अतएवहेमाद्रौभविष्ये ॥ कार्त्तिकेकृष्णपक्षेतुचतुर्दश्यामिनोदये ॥ अवश्यमेवकर्त्तव्यंस्नानंनरकभीरुणेति ॥ इनःसूर्यःइनश्चंद्रइतिव्याचक्षाणस्तुभ्रांतएव ॥ अतएवचतुर्दश्यांदिनोदयेइतिप्राचांपुस्तकेषुपाठः ॥ अत्रचयथाचारंव्यवस्थेतिकेचित् ॥ परदिनेनयदोदयेचंद्रेलक्ष्येइत्याहुः ॥ पूर्वविद्धचतुर्दश्यांकार्त्तिकस्यसितेतरे ॥ पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतइतिस्कांदाच्चाराच्च ॥ वस्तुतस्तुचंद्रोदयोमुख्यःकालःसूर्योदयोगौणःउत्तरभावित्वात् ॥ अतएवमंडनः ॥ स्वकालादुत्तरेगौणःकालःसर्वस्यकर्मणइति ॥ एवंचदाक्षिणात्यशिष्टाचारोऽप्यनुगुणोभवति ॥ एवंचाभ्यंगेमुख्याचंद्रोदयव्यापिनीदिनद्वयेतद्व्याप्तौपूर्वापूर्वोक्तस्कांदात् ॥ दिनद्वयेव्याप्त्यभावेपिपूर्वैवगौणकालेसत्वात् ॥ तत्राप्यभावेऽपिपूर्वैव ॥ तिथ्यादौतुभवेद्यावान्ह्रासोवृद्धिःपरेऽहनि ॥ तावान्ग्राह्यःसपूर्वेद्युरदृष्टोऽपिस्वकर्मणीतिवाक्येनत्रयोदश्यांते चतुर्दशीह्रासप्रक्षेपेणचंद्रोदयेपारिभाषिकचतुर्दशीसद्भावात् (अतएवचंद्रप्रकाशे) त्रयोदशीयदाप्रातःक्षयंयातिचतुर्दशी ॥ रात्रिशेषेत्वमावास्यातदाभ्यंगेत्रयोदशीति ( ब्राह्मे ) तैलेलक्ष्मीजले

गंगादीपावल्याश्चतुर्दशी ॥ प्रातःस्नानंतुयःकुर्याद्यमलो कंनपश्यतीति ॥ पाद्मे ॥ अपामार्गमथोतुवींप्रपुन्नाटम थापरम् ॥ भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै (मंत्र स्तु) सीतालोष्टसमायुक्तसकंटकदलान्विताम् ॥ हर पापमपामार्गभ्राम्यमाणःपुनःपुनरिति ॥ तर्पणमुक्तंम दनरत्नेभविष्ये ॥ ततश्चतर्पणंकार्यंधर्मराजस्यनामभिः॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायका लायसर्वभूतक्षयायच ॥ औदुम्बरायदध्नायनीलायपर मेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायतेनम इति ॥ यज्ञोपवीतिनाकार्यंप्राचीनावीतिनाथवा ॥ देवत्वंचपि तृत्वंचयमस्यास्यद्विरूपतेति ॥ जीवत्पितापिकुर्वीततर्प णंयमभीष्मयोरिति (पाद्मोक्तेः) जीवत्पितुरप्यत्राधिका रः॥ ततःप्रदोषसमयेदीपान्दद्यान्मनोरमान् ॥ ब्रह्मवि ष्णुशिवादीनाम्भवनेषुमठेषुच ॥ प्राकारोद्यानवापीषुप्र तोलीषूटजेषुच ॥ मन्दुरासुविविक्तासुहस्तिशालासुचैव हीति(लैङ्गे) ततःप्रेतचतुर्दश्याम्भोजयित्वातपोधनान्॥ शैवविप्रांस्त्वथपरान्शिवलोकेमहीयते ॥ दानन्दत्वा तुतेभ्यश्चयमलोकन्नगच्छति ॥ माषपत्रस्यशाकेनभु क्त्वातत्रादिनेनरः॥ प्रेतचतुर्दशीकालेसर्वपापैःप्रमुच्यतइ ति ॥ कार्त्तिकेशुक्लेवैकुण्ठचतुर्दशी ॥ वर्षेवैहेमलम्बा ख्येमासिश्रीमतिकार्त्तिके ॥ शुक्लपक्षेचतुर्दश्यामरुणा भ्युदयम्प्रति ॥ महादेवतिथौब्राह्मचेमुहूर्त्तेमणिकर्णिके॥ स्नात्वाविश्वेश्वरोदेव्याविश्वेश्वरमपूजयत ॥ संक्षेपं ज्योतिषस्तस्यप्रतिष्ठाख्यन्तदाकरोत् ॥ स्वयमेवस्व

मात्मानञ्चरन्याशुयतव्रतामिति (तथा) ततःप्रभातेवि
मलेकृत्वापूजांमहाद्भुताम् ॥ दण्डपाणेर्महानास्तिवने
ऽस्मिन्कृतपारणः ॥ श्रीमद्भवानीसदनम्प्रविश्येदमनु
त्तमामितिसनत्कुमारसंहितोक्तेः॥ तत्रप्रकृतिस्वरूपेणाने
नार्थवादेनस्नात्वाविश्वेश्वरः पूज्यइतिविधिःकल्प्यते ।
ततःप्राभातिकपारणाविधेश्चपूर्वेदिनेउपवासः ॥ सचच
तुर्दशीयुक्ताऽरुणोदयवत्यहोरात्रेकार्यः (काशीखण्डे) का
र्त्तिकस्यचतुर्दश्यांविश्वेशंयोविलोकयेत् ॥ स्नात्वाचो
त्तरवाहिन्यांनतस्यपुनरागातिरिति (मार्गशुक्लचतुर्दश्यां
पिशाचमोचनयात्रोक्ताकाशीखण्डे) मार्गशुक्लचतुर्दश्या
ङ्कपर्दीश्वरसान्निधौ ॥ स्नात्वान्यत्रापिमरणान्नपैशाच्य
मवाप्नुयुः ॥ इमांसांवत्सरींयात्रांयेकरिष्यन्तिमानवाः॥
तीर्थप्रतिग्रहात्पापान्निस्तरिष्यन्तितेनराइति (अथशि
वरात्रिःस्कान्दे) माघस्यकृष्णपक्षेयातिथिश्चैवचतुर्दशी
शिवरात्रिस्तुसाख्यातासर्वपापनिषूदिनीति ॥ तच्चशिव
रात्रिव्रतंनित्यङ्काम्यञ्च ॥ परात्परतरन्नास्तिशिवरात्रिः
परात्परम्॥ नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्वरम्॥ ज
न्तुर्जन्मसहस्रेषुभ्रमतेनात्रसंशयइति ॥ तत्रैवाकरणे
ऽनिष्टश्रुतेःनित्यम्॥ शिवञ्चपूजयित्वायोजागर्त्तिचचतु
र्दशीम् ॥ मातुःपयोधररसंनपिबेत्सकदाचन ॥ ममभ
क्तस्तुयोदेविशिवरात्रिमुपोषकः ॥ गणत्वमक्षयंदिव्यम
क्षय्यंशिवशासनम् ॥ सर्वान्भुक्त्वामहाभोगान्मृतो
भूयोनजायतेइति (तत्रैवफलश्रुतेः॥ काम्यम्) शिव
रात्रिव्रतंनामसर्वपापप्रणाशनम् ॥ आचाण्डालमनु

ष्याणाम्भुक्तिमुक्तिप्रदायकमितीशानसंहितोक्तेः (त
था) उपवासप्रभावेणबलादपिचजागरात् ॥ शिवरा
त्रेस्तथातस्यलिङ्गस्यापिप्रपूजया ॥ अक्षय्यांल्लभतेलो
कान्शिवसायुज्यमाप्नुयादिति॥ नागरखण्डोक्तेरुपवा
सजागरणपूजाप्रधानानि (यत्तुसह्याद्रिखण्डे) स्वयञ्च
लिङ्गमभ्यर्च्यसोपवासःसजागरः ॥ अजानन्नपिनिष्पा
पोनिषादोगणताङ्गतइति ॥ उपवासजागरणयोःकर्त्तृगु
णत्वश्रवणन्तदर्थवादाग्रत्वेननतयोःप्राधान्यंविहन्ति॥
तत्रचतुर्दशीनिशीथव्यापिनीग्राह्या ॥ माघकृष्णचतुर्द
श्यामादिदेवोमहानिशि ॥ शिवलिङ्गमभूत्तत्रकोटिसू
र्यसमप्रभम् ॥ तत्कालव्यापिनीग्राह्याशिवरात्रिव्रतेति
थिरितीशानसंहितोक्तेः(नारदीयसंहितायामपि) अर्द्ध
रात्रेयुतायत्रमाघकृष्णचतुर्दशी॥ शिवरात्रिव्रतन्तत्रवा
जिमेधफलंलभेत् (स्कान्देऽपि) महतामपिपापानांदृष्टा
वैनिष्कृतिःपुरा ॥ नदृष्टाकुर्वताम्पुंसांकुहूयुक्तान्तिथिंशि
वामितिदर्शयोगस्यनिन्दितत्वाच्च (स्मृत्यन्तरेऽपि) भ
वेद्यत्रत्रयोदश्याम्भूतव्याप्तामहानिशा ॥ शिवरात्रिव्र
तन्तत्रकुर्याज्जागरणन्तथेति (ईशानसंहितायामपि)
व्याप्यार्द्धरात्रंयस्यान्तुलभतेयाचतुर्दशी ॥ तस्यामेव
व्रतङ्कार्यंमत्प्रसादार्थिभिर्नरैः ॥ पूर्वेद्युर्वापरेद्युर्वामहानि
शिचतुर्दशी ॥ व्याप्त्यासादृश्यतेयस्यान्तस्यांकुर्याद्व्रत
न्नरः॥ लिङ्गाविर्भावकालेतुव्याप्ताग्राह्याचतुर्दशी ॥ तदू
र्ध्वाधोन्विताभूतासाकार्याव्रतिभिःसदा॥ ममप्रियकरी
ह्येषामाघकृष्णचतुर्दशी ॥ महानिशान्वितायातुतत्र

कुर्यादिदंव्रतमिति ॥ दिनद्वयेनिशीथव्याप्तावव्याप्तौ वापरैव॥ आदित्यास्तमयेकालेअस्तिचेद्याचतुर्दशी ॥ तद्रात्रिःशिवरात्रिःस्यात्साभवेदुत्तमोत्तमेति (कामिकात्) प्रदोषव्यापिनीग्राह्याशिवरात्रिचतुर्दशी ॥ रात्रौ जागरणंयस्मात्तस्मात्तांसमुपोषयेदितिस्मृत्यन्तरात् ॥ दिवारात्रिव्रतंयच्चएकमेवतिथौगतम् ॥ तस्यामुभययोगिन्यामाचरेत्तद्व्रतंव्रतीतिस्मृतेः।प्रदोषव्याप्त्याधिक्याच्चपूर्वदिनएवप्रदोषनिशीथोभयव्याप्तौपूर्वैव॥ त्रयोदशीयदादेविदिनभुक्तिप्रमाणतः ॥ जागरेशिवरात्रिःस्यान्निशिपूर्वचतुर्दशीतिस्कांदात्परेद्युरेवतादृशीचेत्सैव ॥ निशाद्वयचतुर्दश्यांपूर्वात्याज्यापराशुभेति (कामिकात्) यदापूर्वेद्युर्निशीथेपरेद्युश्चप्रदोषेतदापूर्वेद्युरेव ॥ अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगोयदाभवेत् ॥ पूर्वविद्धैव कर्त्तव्याशिवरात्रिःशिवप्रियैर्तिपाद्मोक्तेः (यत्तु) एतस्मादेववचनाद्दिनद्वयेनिशीथव्याप्तौ पूर्वैवेतिहेमाद्रिमदनौ (तन्न) एतस्यवचसउत्तरदिनेनिशीथव्याप्त्यभावेऽप्युपपत्तेः ॥ उत्तरदिनगतप्रदोषनिशीथोभयव्याप्त्यादिवारात्रिव्रतमितिपूर्वोक्तवचसः संकल्पकालस्यचबाधायोगात् ॥ माधवाचार्यास्तातचरणाश्चैवम्। अयमेवनिर्णयःप्रतिमासशिवरात्रावपि ॥ आदौमार्गशिरोमासे दीपोत्सवदिनेतथा॥ गृह्णीयान्माघमासेवाद्वादशैवमुपोषयेदितिहेमाद्रौस्कांदे ॥ चतुर्दश्यंतरेऽप्यारभ्यद्वादशानामपिद्वादशाचरणविधानात् ॥ प्रतिमासंकार्यंव्रतम् चतुर्दशाब्दंचेदंकार्यम् ॥ तथाचहेमाद्रौकालोत्तरे ॥

चतुर्दशाब्दंकर्त्तव्यंशिवरात्रिव्रतंशुभमिति । इयंचरवि
भौमयोःशिवयोगेचातिप्रशस्तेतिमाधवीयेस्कादे ॥ मा
घकृष्णचतुर्दश्यारविवारोयदाभवेत् ॥ भौमोवाथभवे
द्देविकर्त्तव्यंवृतमुत्तमम् ॥ शिवयोगस्ययोगेवैतद्भवेदुत्त
मोत्तममिति (भविष्ये) माघमासेचतुर्दश्यांकृष्णपक्षे
समाहितः ॥ कृत्तिवासेश्वरंलिंगमर्चयंतिशिवंशुभम् ॥
तेयांतिपरमंस्थानंसदाशिवमनामयमिति ॥ पारणंतुति
थिमध्यएवकार्यम् ॥ तथाचमाधवीयेस्कांदे ॥ उपोष
णंचतुर्दश्यांचतुर्दश्यांतुपारणम् ॥ कृतैःसुकृतलक्षैश्च
लभ्यतेवाथवानवा ॥ ब्रह्माण्डोपरिमध्येतुयानितीर्थानि
संतिवै ॥ संस्नातानिभवन्तीहभूतायांपारणेकृते ॥ ति
थीनामेवसर्वासामुपवासवृतादिषु ॥ तिथ्यंतेपारणंकु
र्याद्विनाशिवचतुर्दशीमिति (यत्तु) जन्माष्टमीरोहिणी
चशिवरात्रिस्तथैवच ॥ पूर्वविद्धैवकर्त्तव्यातिथिभांते
चपारणमिति (स्कांदेच) कृष्णाष्टमीस्कन्दषष्ठीशिव
रात्रिश्चतुर्दशी॥एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवे
दिति ॥ तद्गौणकालपरम् ॥ स्वकालादुत्तरोगौणःकालः
सर्वस्यकर्मणइतिमंडनोक्तेः (इतिचतुर्दशीनिर्णयः)
(अथपूर्णिमा) सासावित्रीव्यतिरिक्तासर्वापरैव ॥ भू
तविद्धानकर्त्तव्यादर्शःपूर्णाकदाचन ॥ वर्ज्जयित्वामु
निश्रेष्ठसावित्रीव्रतमुत्तममिति (ब्रह्मवैवर्त्तात्) सर्वास्व
पिपूर्णिमासुअमावास्यावच्छ्राद्धंनित्यम् (तथाचपिता
महः) अमावास्याव्यतीपातपौर्णमास्यष्टकासुच ॥ वि
द्वान्श्राद्धमकुर्वाणोनरकंप्रतिपद्यतेइति ॥ चैत्रपौर्णि

मायांविशेषोवायवीये ॥ संवत्सरंकृताचार्यासाफल्या याखिलान्सुरान् ॥ दमनेनार्चयेद्देवंविशेषेणसदाशिव मिति ॥ मेषस्थेरवौयामावास्यातदंते चांद्रेमासेयापौर्णि मासा चैत्री (एतत्क्रमेणान्याअपि) (तदुक्तंहरदत्तेन) मेषादिस्थेतुसवितरियोयोदर्शःप्रवर्त्तते ॥ चांद्रमासास्त दन्ताश्चचैत्राद्याद्वादशस्मृताः ॥ तेषुप्राप्तापौर्णमासी सासाचैत्र्यादिकास्मृताः ॥ कदाचित्केनयोगेननक्षत्र स्येतिनिर्णयइति ॥ अथवैशाखपौर्णमास्यांविशेषः (त त्रजाबालिः) शृतान्नमुदकुम्भंचवैशाख्यांचविशेषतः॥ निर्दिश्यधर्मराजायगोदानफलमाप्नुयात् ॥ शृतंपक्वं ज्येष्ठपौर्णमास्यांवटसावित्रीव्रतंभविष्ये ॥ ज्येष्ठेमा सिसितेपक्षेपौर्णमास्यांतथाव्रतम् ॥ चीर्णंपुरामहाभ क्त्या कथंतेनमयानृपेति ॥ इयंपूर्वविद्धाग्राह्यायुग्मवच नात् (ब्रह्मवैवर्त्तेऽपि) प्रतिपत्पञ्चमीभूतसावित्रीव्रतपू र्णिमा ॥ नवमीदशमीचैवनोपोष्याःपरसंयुताः ॥ आ षाढीपौर्णमासीतुकोकिलव्रतप्रक्रमे सन्ध्याकालव्यापि नीग्राह्या ॥ आषाढपौर्णमास्यांतुसन्ध्याकालेह्युपस्थि ते ॥ सङ्कल्पयेन्मासमेकंश्रावणेप्रत्यहंत्विदमितिभवि ष्योक्तेः ॥ तत्रैवव्यासपूजायांतुऔदयिकीत्रिमुहूर्त्ताग्रा ह्यातथाचविश्वेश्वरपद्धतौ ॥ त्रिमुहूर्त्ताधिकाग्राह्यापर्व द्वौरप्रमाणयोरिति॥ अत्रैवाषाढेश्वरयात्रापूजाचोक्ता काशीखण्डे ॥ उदीच्यांभारभूतेशमाषाढीशंसमर्चये त् ॥ आषाढ्यांपञ्चदश्यांवैनपापैःपरितप्यते ॥ कृत्वा सांवत्सरींयात्रामनेनाजायतेनर इति ॥ अनेनानिष्पा

पःश्रावणीपौर्णमासीपवित्रार्पणादौपूर्वविद्धाग्राह्या ॥ (तदाहबृहद्यमः) श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी ॥ पूर्वविद्धाप्रकर्त्तव्याशिवरात्रिर्बलेर्दिनमिति ॥ वेधस्तु त्रिमुहूर्त्तात्मकोज्ञेयः (तदुक्तंस्कांदे) यांतिथिंसमनुप्राप्य यात्यस्तंपद्मिनीपतिः ॥ सातिथिस्तद्दिनेप्रोक्तात्रिमुहूर्त्तै वयाभवेदिति (अथोपाकर्म) याज्ञवल्क्यः ॥ अध्याया नामुपाकर्मश्रावण्यांश्रवणेनच ॥ हस्तेनौषधिभावेवा पंचम्यांश्रावणस्यत्विति ॥ हस्तेनयुक्तायांपञ्चम्यामि तिस्मृतिचन्द्रिकायाम् ॥ दिनान्तरेऽपिहस्तेनयुक्तइ तिहेमाद्रेः ॥ श्रवणश्रावण्योरिवेदमेवयुक्तम् ॥ एवमे वस्मृत्यर्थसारेऽपि॥ ओषधीनामप्रादुर्भावेतुबह्वृचगृह्य कारिकायाम्॥अध्यायानामुपाकर्मश्रावण्यांश्रवणेनतु॥ अदृष्टौषधयस्तस्मिन्मासेतुनभवन्तिचेत् ॥ तदाभाद्र पदेमासेश्रवणेनकरोतितत् ॥ अत्रश्रवणंधनिष्ठायुतंग्रा ह्यम् ॥ श्रवणेनतुयत्कर्मउत्तराषाढसंयुतम् । संवत्सरकृ तोऽध्यायस्तत्क्षणादेवनश्यति ॥ धनिष्ठासंयुतंकुर्याच्छ्रा वणंकर्मयद्भवेदितिव्यासोक्तेः (गर्गः) पर्वण्यौदयिकेकु र्युःश्रावणंतैत्तिरीयकाः ॥ बह्वृचाःश्रवणेकुर्युर्ग्रहसंक्रा न्तिवर्ज्जितइति ॥ अत्रतैत्तिरीयाऔदयिकेपर्वणिकुर्यु रन्येतुयाजुषाः पूर्वविद्धेएव ॥ श्रावणीदुर्गनवमीदूर्वाचै वहुताशनी ॥ पूर्वविद्धैवकर्त्तव्याशिवरात्रिर्बलेर्दिनमि तिवचनादितिहेमाद्रौ ॥ तैत्तिरीयपदंयाजुषमात्रोपल क्षणम् ॥ तेनसर्वेऽप्यौदयिकेश्रावणीदुर्गनवमीत्यादि वस्तुपवित्रारोपणादिकृत्यांतर विषयमुपाकर्मागभूता

भ्युदयिकविषयंचेति निर्णयामृते ॥ अत्रोपलक्षणत्वे
मानंचिंत्यम् ॥ पर्वश्रवणगतयोरेवग्रहणसंक्रान्त्योःप
र्युदासप्रयोजकतातत्सामानाधिकरण्येनश्रुतत्वात् ॥ न
तिथ्यंतरननक्षत्रान्तरगतयोरपि ॥ तेनचतुर्दशीप्रातिप
दुत्तराषाढाधनिष्ठादौ ग्रहणेसंक्रान्तौवापर्वणिश्रवणेचो
पाकर्मकार्यमेव (स्मृतिमहार्णवे) संक्रान्तिर्ग्रहणंवापि
पौर्णमास्यांयदाभवेत् ॥ उपाकृतिस्तुपञ्चम्यांकार्यावा
जसनेयिभिरिति ॥ वाजसनेयिपदंबह्वृचानामप्युपल
क्षणम् ॥ पञ्चम्यांहस्तेनवेतितत्सूत्रात् ॥ ग्रहसंक्रान्ति
निषेधोऽत्रार्द्धरात्रादर्वागित्याह ॥ प्रयोगपारिजातेवृद्ध
मनुः॥ यद्यप्यर्द्धरात्रादर्वाग्ग्रहसंक्रमएववा ॥ नोपाक
र्मतदाकुर्याच्छ्रावण्यांश्रवणेपिचेति (कात्यायने) अर्द्ध
रात्रादधस्ताञ्चेत्संक्रान्तिग्रहणेतदा ॥ उपाकर्मनकुर्वी
त परतश्चेन्नदोषकृदितिपरस्ताञ्चेत्यपरेऽहनीत्यपिक्वाचि
त्पाठः॥ तदापरेऽहन्यपिनिषेधः (सामगानांकालविशे
षमाहगर्गः) सिंहेरवौतुपुष्यर्क्षेपूर्वाह्णेविचरेद्बहिः॥ छंदो
गामिलिताःकुर्युरुत्सर्गंस्वस्वच्छन्दसाम् ॥ शुक्लपक्षेतुह
स्तेनउपाकर्मापराह्णिकामिति ॥ सिंहेरवावित्युपाकर्मणा
पिनसम्बध्यते ॥ यत्तुस्मृत्यंतरे ॥ वेदोपाकरणेप्राप्तेकु
लीरेसंस्थितेरवौ ॥ उपाकर्मनकर्त्तव्यंकर्त्तव्यंसिंहसंयुते
इति ॥तच्छन्दोगपरम्यदपिबृहस्पतिः॥ नर्मदोत्तरभागे
तुकर्त्तव्यंसिंहयुक्तके॥ कर्कटेसंस्थितेभानावुपाकुर्यात्तुद
क्षिणइति ॥ तदपितान्प्रत्येवदेशविशेषेणसिंहकर्कव्य
वस्थापरम् (एवंहिलाघवंभवति) यत्सिंहेकार्यमित्यन्

द्यतन्नर्मदोत्तरभागइति ॥ एवञ्चतानूप्रत्येवदक्षिणभा गेकदाकार्यमित्याकांक्षितविधिर्भवति ॥ वह्वृचादीन् प्रतितुअप्राप्तसिंहादिविधेर्गौरवमनाकांक्षित विधिश्च स्यात्॥ एककोटिसिंहमात्रप्राप्तावपिकोटचन्तरकर्कटा प्राप्तौचव्यवस्थाविधिः सङ्गच्छतएवपाठतोद्वितीयस्था नेतनूनपायादन्येषामितिवदितितातचरणाः (कात्याय नः) उत्कर्षःकालवृद्धौस्यादुपाकर्मादिकर्मणि (पराश रः) उपाकर्मतथोत्सर्गप्रसवाहोत्सवाष्टकाः ॥ मासवृ द्धौपरेकार्यावर्ज्जयित्वातुपैतृकमिति (परेउत्तरेमासि) प्रसवाहोत्सवोजातेष्टयादेःसंग्रहः ॥ गुरुभार्गवयोर्मौढ्ये बालेवावार्द्धकेऽपिवा॥ तथाधिमाससंसर्पमलमासादिषु द्विजाः ॥ प्रथमोपाकृतिर्नस्यात्कृतङ्कर्मविनाशकृदिति (यत्तुकश्यपः) गुरुशुक्रतिरोधानेवर्ज्जयेच्छ्रुतिचोदितम् (इत्याहभगवानत्रिः) श्रावणन्तुविशेषतइति॥ तदपि प्रथमोपाकर्मपरम् ॥ अत्रापिमासादौप्रथमोपाकर्मनि षेधः॥ प्रत्यवायातिशयद्योतकोनपुनर्द्वितीयादिप्रयोग व्यर्थः ॥ नित्यस्यापिसगतिकत्वेनमलेनकर्त्तुमयुक्तत्वा त् ॥ कात्यायनादिभिःसर्वप्रयोगसाधारण्येननिषेधा च्च ॥ यद्वासामगानामधिमासेकर्त्तव्यतयाप्रथमोपाकर्म निषेधःसामगविषयएव (यत्तुऋष्यश्रृङ्गः) दशहरासुनो त्कर्षश्चतुर्ष्वपियुगादिषु ॥ उपाकर्ममहाषष्ठ्योर्ह्येतदि ष्टवृषादितइतितच्छन्दोगान्प्रति ॥ तेषांसिंहकर्कोपजी वनेनविहितस्योपाकर्मणोऽग्रिममासेसम्भवात् (कात्या यनः) प्रत्यदूयदुपाकर्मसोत्सर्गांश्रधिवद्द्विजैः ॥ क्रियते

छन्दसान्तेनपुनराप्यायनम्भवेत् ॥ अयातयामैश्छन्दोभिर्यत्कर्मक्रियतेद्विजैः ॥ क्रीडमानैरपिसदातत्तेषांसिद्धिकारणम् (कौर्म्ये) श्रावणस्यतुमासस्यपौर्णमास्यांद्विजोत्तमाः ॥ आषाढ्यांप्रौष्ठपद्यांवावेदोपाकरणंस्मृतम् ॥ अत्राषाढीबौद्धायनपरैव ॥ श्रावण्याम्पौर्णमास्यांआषाढ्यांवोपकृत्येतितत्सूत्रादितिदीपिकायाम्॥ युक्तश्चेदम्॥सामान्यविधिरस्पष्टःसंह्रियतेविशेषतइतिन्यायात् (यत्तुनिर्णयामृतेमाधवीयेच) उपाकरणमनूद्यमासमात्रंविधीयते॥उपाकर्मतुसर्वशाखाप्रत्ययमेकङ्कर्मेतिन्यायेनैकमेवतेन बह्वृचसामगयोरप्याषाढगतश्रवणहस्तयोरुपाकर्मपौर्णमासीपदन्त्वप्रत्यानुवादइति(तन्न) उपसंहारेसत्याषाढ्यांअन्यान्प्रत्यावृत्तेः ॥ पौर्णमासीग्रहावसत्यानुवादत्वायोगाच्च (गोभिलः) पर्वण्यौदयिकेकुर्युःश्रावणीतैत्तिरीयकाः ॥ बह्वृचाःश्रवणर्क्षेतुहस्तर्क्षेसामवेदिनइति ॥ औदयिकइतिश्रवणहस्ताभ्यामपिसम्बध्यते ॥ औदयिकम्पर्वविशिनष्टिसएव ॥ श्रावणीपौर्णमासीतुसङ्गमात्परतोयदि ॥ तदात्वौदयिकीग्राह्यानान्याह्यौदयिकीभवेदिति (परिशिष्टे) धनिष्ठाप्रतिपद्युक्तंत्वाष्ट्रऋक्षसमन्वितम् ॥ श्रावणङ्कर्मकुर्वीतऋग्यजुःसामपाठकः (त्वाष्ट्रंचित्रा ॥ प्रचेताः) भवेदुपाकृतिःपौर्णमास्याम्पूर्वाह्णएवतुइति (एतद्याजुषपरम्) छन्दोगानांविशेषमाहगोभिलः ॥ अध्यायानामुपाकर्मकुर्यात्कालेपराह्णिके ॥ पूर्वाह्णेतुविसर्गःस्यादितिवेदविदांविदुरिति ॥ उपाकृत्याधीयीतेतिसूत्राद्दिनेउत्सर्जनोपा

कर्मणीग्रहणाध्ययनाङ्गे ॥ ग्रहणाध्ययनन्तुब्रह्मचारिण एवअधीत्यस्नायादितिस्मृत्याध्यस्तानप्राक्कालीनत्वाव गतेः ॥ अतोब्रह्मचारिणएवेमइतिकेचित् (तन्न) स्नातकस्यापिग्रहणाध्ययनसम्भवात् ॥ वेदंव्रतानिवापारंनीत्वाह्युभयमेवच ॥ अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेदिति याज्ञवल्क्यवाक्येनसमावृत्तोब्रह्मचारिकल्पेनयथान्यायमितरेजायोपेत इत्याश्वलायनसूत्रेणच स्नानोत्तरमापितद्विधानात् ॥ अधीयीतेत्यनुवृत्तिःसमावृत्तोऽकृतविवाहः ॥ ब्रह्मचारिकल्पस्तन्नियमजातंइतरेब्रह्मचारिणः ॥ जायोपेतंगृहस्थमेवंचत्रयोऽप्यधिकारिणइति ॥ माधवोऽप्येवम् ( यत्तुहेमाद्रिः) जायोपेयीतिपाठः समावृतोजायोपेयीतिविशेषविशेष्यभावेनच व्याचष्टतन्न ॥ व्यवहितान्वयात्समावृत्तपदवैयर्थ्यापाताच्च (हरदत्तस्तु) उपाकृत्याधीयीतेत्यध्ययनपदेनग्रहणधारणेब्रह्मयज्ञपारणाद्यर्थोच्चारणमात्रंगृह्यते ॥ नग्रहणाध्ययनमात्रंतेनतद्व्रतांब्रह्मचारि गृहस्थवानप्रस्थानां त्रयाणामप्ययंधर्मः॥ जायोपेयोतिचपाठः॥ तत्रैवसमावृत्तोब्रह्मचारिकल्पेनेतिप्राप्तम् ॥ ब्रह्मचर्यंस्मृतौप्रतिसूत्र व्याख्यानेयस्माद्ब्रह्मयज्ञाध्ययनंनित्यमतः उपाकर्मावश्यकमित्यादिनाब्रह्मयज्ञांगताप्युक्ता अतःसर्वैरपिकार्यम् (अतएवजीर्णप्रयोगरत्नेगोभिलः) उपाकर्मोत्सर्जनं चवनस्थानामपीष्यते॥ धारणाध्ययनांगत्वाद्गृहिणांब्रह्मचारिणामिति॥ उपाकर्मणआद्यप्रयोगेचवृद्धिश्राद्धमंगमितिचनारायणवृत्तौअप्राप्याप्यैरन्वारब्धोऽध्येष्यमाण

इत्याश्वलायनादिसूत्राच्चतुरावर्त्तपञ्चावर्त्ताख्यभिन्नका
नामपिविश्वामित्रजामदग्न्यादीनामपिसहाधिकारः॥
वशिष्ठशुनकात्रिवध्र्यश्वराजन्यानांनाराशंसोद्वितीयःप्र
याजस्तनूनपादन्पादन्येषामिति नराशंसाद्वितीयप्रया
जवतोराज्ञस्तनूपाद्वितीयप्रयाजवतश्चकाश्यपादेः पुरो
हितस्यैतेनराजपुरोहितौ सायुज्यकामौयजेयातामिति
विहितकुलीयागइव ॥ तत्रापिसमानकल्पयोरेवपुरोहि
तयोराधिकारोऽस्त्विति चेत् ॥ एतदधिकरणस्यतुल्यक
ल्पाधिकाराधिकरणयवादतयाभाष्यादौप्रतिपादितत्वा
त् (अतएवकार्ष्णाजिनिः) उपाकर्मणिचोत्सर्गेयथाका
लंसमेत्यतु ॥ ऋषीन्दर्भमयान्कृत्वापूजयेत्तान्प्रयत्न
त इतिव्यासः ॥ ऋषीणामर्चनंसर्वंकर्त्तव्यंचनिवीतिने
तिकार्ष्णाजिनिः ॥ वेदारंभणतःपूर्वंशङ्कुप्राशनतःपर
म् ॥ नवयज्ञोपवीतानिदद्याद्वैधारयेत्ततः (इतिगालवः)
कृत्वायज्ञोपवीतानिनवानिवसुधाधिप ॥ हुत्वाग्नौगु
रवेदत्वापितृभ्योधारयेत्ततइति ॥ पितृभ्यइत्यत्रापिद
त्वेत्यनुषज्यते (वायवीये) उपाकर्मणिविप्रेभ्योदद्याद्य
ज्ञोपवीतकम् ॥ आयुष्मान्जायतेतेनकर्मणामानवोभु
वि (ब्रह्मचारिणोविशेषःकालादर्शे) मौञ्जीयज्ञोपवीतं
चनवदण्डश्चधारयेत् ॥ अजिनंकटिसूत्रंचनववस्त्रंतथै
वच (अत्रविशेषःकारिकायाम्) पश्चादग्रेषुदर्भेषुप्रा
गग्रेषूपवेश्यच ॥ आसिच्यापःप्रणवादौदर्भास्तत्रनिधा
यच ॥ प्रागग्रदर्भगर्भास्तेकुर्युर्ब्रह्माञ्जलीनथ ॥ सव्या
हृतिजपंत्युच्चैःसावित्रींब्रह्मयज्ञवत् ॥ त्रिरभ्यस्यपुर

स्कारंव्याहृतीश्चात्रकर्मणि (गोभिलः) उत्सर्जनंचवे दानामुपाकरणकर्मच ॥ अकृत्वावेदजाप्येनफलंनाप्नो तिमानवः (इत्युपाकर्मनिर्णयः) (अथोत्सर्ज्जनम्) म नुः ॥ पुष्येतुछन्दसांकुर्याद्बहिरुत्सर्ज्जनंद्विजः ॥ माघ शुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेऽहनीति ॥ व्यवस्थितश्चायं विकल्पः ॥ श्रावण्यांप्रौष्ठपद्यांवाप्युपाकृत्ययथाविधि ॥ युक्तश्छन्दांस्यधीयीतविप्रोऽर्द्धपंचमादिति ॥ तेनैवोक्त त्वात् ॥ पूर्वाह्णेप्रथमेऽहनीत्युभयत्रसंबध्यते ॥ एवं चयदाश्रावण्यामुपाकर्मतदापौषमासशुक्लप्रतिपदिपूर्वा ह्णेउत्सर्ज्जनम् ॥ यदातुप्रौष्ठपद्यामुपाकर्मतदामाघशुक्ल प्रतिपत्पूर्वाह्णेइतिस्मृतिचंद्रिकाकारादयः ॥ विज्ञानेश्व रयोगिनस्तुपूर्वाह्णइत्येवपदंपुष्येऽन्वेति ॥ नशुक्लपक्षादि पौषमासस्यरोहिण्यामष्टकायामथापिवेति ॥ तत्रका लविशेषस्योक्तत्वादित्याहुः ॥ युक्तंतुपूर्वाह्णेदैविकंकर्मे तिपूर्वाह्णस्यापिप्राप्तेर्नतस्यापिविधानम् ॥ एवंचयदा पौषरोहिण्यष्टकयोरेवोत्सर्जनं तदार्द्धपञ्चमान्मासानि त्यत्रार्द्धशब्दश्चन्द्रार्द्धमौलिरित्यादिवत्खंडवचनएव ॥ अनियतत्वंचबौद्धायनोक्तंश्रावण्यांपौर्णमास्यां आषा ढ्यांवोपाकृत्यतैष्यांमाघ्यांवोत्सृजेदिति (वशिष्ठेनाप्यु क्तम्) अर्द्धपंचमान्मासानधीत्योत्सृजत्यर्द्धषष्ठान्वा,इ ति (यत्तुकात्यायनः)उपाकृत्योदगयनेततोऽधीयीतधर्म वित् ॥ उत्सर्गश्चैकएषांतुतैष्यांप्रौष्ठपदेऽपिवेति ॥ अ त्रप्रौष्ठपदंसिंहोपलक्षकंतच्छंदोगपरमेव ॥ सिंहेरवौतु पुष्पर्क्षेपूर्वाह्णेविचरेद्बहिः ॥ छंदोगामिलिताः कुर्युरु

त्सर्गंसर्वंछन्दसामितिगार्ग्यवचनात् ॥ खादिरगृह्येतु पुष्येतूत्सर्ज्जनंकुर्यादुपाकर्मदिनेऽथवेति (कालांतरम प्युक्तम् ॥ एतदनुकूलैवश्रुतिः ॥ स्वाध्यायमधीतेऽब्द मिति ॥ अतएवोत्सर्ज्जनशब्दःकालोपलक्षणम् ॥ पू र्वोक्तस्यगार्गीयवाक्यस्यापीत्यर्थः ॥ सामगानांद्वेउपा कर्मणी ॥ एकःसिंहार्कंहस्तेऽपरंमकरार्केहस्ते ॥ तत्रपू र्वंग्रामगेयसामाध्ययनार्थम् ॥ अपरंचारण्यगेयसामा ध्ययनार्थम् ॥ अतएवोपाकृत्योदगयनइतिउपाकर्म द्वयविधानाच्चोत्सर्ज्जनद्वयप्राप्तेरुत्सर्गइचैकएषामित्यर्थ वत् (अतःऋषिपूजातर्पणंकार्यम् ) तथास्मृतिचंद्रि कायांपुराणम् ॥ उपाकर्मणिचोत्सर्गेऽथवाकालंसमेत्य च ॥ ऋषीनूदर्भमयान्कृत्वापूजयेत्तर्पयेत्ततः (आश्व लायनैस्तु) माघ्यांपौर्णमास्यां विधीयतेइतिकारिको क्तेः ॥ अनुकल्पस्तुपूर्वोक्तखादिरस्मृत्योक्तोज्ञेयः ॥ उत्स र्ज्जनोत्तरंकार्यमनुराह ॥ अतऊर्द्धंतुच्छंदांसिशुक्लेषुनि यतःपठेत् ॥ वेदांगानितुसर्वाणिकृष्णपक्षेतुसंपठेत् ॥ कारिकायांतुविशेषः ॥ अतआरभ्यषण्मासान्षडंगानि त्वधीयते ॥ शुक्लेवेदमधीयते ॥ शुक्लेवेदमधीयीतकृष्णेंऽ गानीतिकेचनेति(तैत्तिरीयाणांविशेषमाहआपस्तम्बः) तैष्यांपौर्णमास्यांरोहिण्यांच विरमेदर्द्धपञ्चमांश्चच तुरोमासानिति(अत्रनदीनांरजोदोषोनेत्याहगार्ग्यः) उ पाकर्मणिचोत्सर्गेरजोदोषोनविद्यते (इत्युत्सर्ज्जनम् ) श्रावण्यामेवरात्रौसर्पबलिस्तैत्तिरीयाणाम् ॥ श्रावण्यां पौर्णमास्यांस्थालीपाकइतिसूत्रात् ॥ आश्वलायनीयैस्तु

श्रवणाकर्मकार्यम् श्रावण्यांपौर्णमास्यांश्रवणाकर्मेतिसूत्रात्॥इदंचप्रदोषव्यापिन्यांपौर्णमास्यांकार्यम् ॥ प्रदोषस्यकर्मकालत्वात् ॥ कर्मणोयस्ययःकालस्तत्कालव्यापिनीतिथिः।तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमितिवाक्यात्॥ दिनद्वयेतद्व्याप्त्यावव्याप्तौचोत्तरदिनेविकृतित्वात्॥ एवंसर्पबलिरपिएतस्यामेवपौर्णमास्यांतत्राप्ययमेवनिर्णयः ॥ आश्विनपौर्णमास्यामावर्त्तनंप्राक्संधिमतिप्रकृतिप्रयोगपर्याप्तेपर्वणिकेवलस्मार्त्ताग्निमतां बह्वृचानामप्याश्वयुजिकर्मआग्रयणस्थालीपाकाः समानतंत्राः पाकयज्ञान्समासाद्यएकाज्यानेकबर्हिषः ॥ एकस्विष्टकृतःकुर्यान्नानापिसतिदैवतइति (तत्सूत्रात्) दर्शेष्टेःपरयुक्तमाग्रायणकंप्राक्पौर्णमासाच्चतदितिदीपिकादिलेखस्त्वेतत्सूत्रागोचरःश्रौतपरः (इष्टिपदात्) आश्वलायनान्यपरोवाव्रीह्याग्रयणमस्यामेवश्यामाकैःप्रस्तरःकार्योनाग्रयणमिति ॥ नारायणस्मृतौप्रयोगरत्नेचतन्नप्रस्तरशब्दस्यपूपादिशब्दवत्संस्कारवाचित्वाद्दर्श पौर्णिमासिकलवनादियुक्तंप्रस्तरंकृत्वाऽऽज्यपात्रादुत्तरतआसाद्यप्राकृतकार्यावाद्यर्थन्तस्मिन्सर्वमासादयेत्॥ कार्त्तिकपौर्णमास्याङ्कार्त्तिकेयदर्शनमुक्तंकाशीखण्डे॥ कार्त्तिक्यांकृत्तिकायुक्तेयःकुर्यात्स्वामिदर्शनम् ॥ सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगइति॥ (त्रिपुरोत्सवोऽप्यत्रोक्तोभविष्ये) पौर्णमास्यान्तुसन्ध्यायाङ्कर्त्तव्यस्त्रिपुरोत्सवः ॥ दद्याददेनमंत्रेणसुदीपांश्चसुरालये ॥ कीटाःपतङ्गामशकाश्चवृक्षाजलेस्थलेयेविचरन्तिजीवाः ॥ दृष्ट्वाप्रदीपं

नहिजन्मभाजोभवंतिसत्यंश्वपचोऽपिविप्राइति ॥ फा
ल्गुनपौर्णमास्यांहोलिकोत्सवः ॥ नृपंप्रतिनारदवचोभ
विष्ये ॥ अद्यपंचदशीशुक्लाफाल्गुनस्यनराधिप॥ अभयं
चैवलोकानांदीयतांपरमेश्वर ॥यथाह्यशङ्कितालोकारमं
तिचहसंतिच॥दारुसंजातंखडानिगृहीत्वाचसमुत्सुकाः।
योद्धारइवनिर्यांतुशिशवःसंप्रहर्षिताः ॥ संचयंशुष्कका
ष्ठानामुपलानांचकारयेत् ॥ तत्राग्निंविधिवद्धुत्वारक्षो
घ्नैर्मंत्रसत्तमैः ॥ ततःकिलकिलाशब्दैस्तालशब्दैर्मनो
हरैः॥ तेनशब्देनसापापाहोमानांनवातिःकृता ( साढो
ढाख्याराक्षसी) तत्रैव॥ सर्वदुष्टापहोह्यमःसर्वरोगोपशां
तिदः॥ क्रियतेऽस्यांद्विजैःपार्थतेनसाहोलिकास्मृतेति ॥
तमग्निंत्रिःपरिक्रम्यगायन्तुचहसन्तुच ॥ जल्पन्तःस्वे
च्छयालोकानिःशंकायस्यजन्मनः (तत्रपूर्णिमाप्रदोष
व्यापिनीग्राह्या) तदुक्तंतत्रैव ॥ सायाह्नेहोलिकांकुर्यात्पू
र्वाह्णेक्रीडनङ्गवामिति ॥ सायाह्नोऽत्रप्रदोषः (तथाच
तत्रैव) तपस्यपूर्णिमायान्तुरजन्यांहोलिकोत्सवइति (च
न्द्रप्रकाशेनारदीये) प्रतिपद्भूतभद्रासुयाऽर्चिताहोलिका
दिवा ॥ संवत्सरश्चतद्राष्ट्रम्पुरन्दहतिसाद्भुतम् ॥ प्रदो
षव्यापिनीग्राह्यापूर्णिमाफाल्गुनीसदा ॥ तस्यांभद्रामु
खन्त्यक्त्वापूज्याहोलानिशामुखइति॥ निशामुखेप्रपूज्ये
तहोलिकासर्वतोमुखैरिति ॥ पृथ्वीश्चन्द्रोदयेदुर्वाससो
वाक्याच्च ॥ दिनद्वयेतद्व्याप्तौपरैव ॥ भद्रायान्दीपि
ताहोलीराष्ट्रभङ्गङ्करोतिवै॥ नगरस्यचनैवेष्टातस्मात्तान्प
रिवर्ज्जयेदिति ॥ पूर्वदिनेभद्रायुक्तत्वेनपुराणसमुच्चयो

क्तानिषेधात् ॥ पूर्वदिनेप्रदोषव्यापिनीनपरदिनेचेत्तदापू
र्वेद्युरेवरात्रौभद्रांविहायकार्या ॥ दिनार्द्धात्परतोयास्या
त्फाल्गुनीपूर्णिमायदि ॥ रात्रौभद्रावसानेतुहोलिकान्त
त्रदीपयेदितिभविष्योत्तरात् ॥ राकायामद्वयादूर्द्ध्वंचतु
र्दश्यांयदाभवेत् ॥ होलाम्भद्रावसानेतुनिशीथान्तेऽपि
दीपयेदितिपुराणसमुच्चयाच्च (यत्तु) भद्रायांविहितङ्कार्य
होलिकायाःप्रपूजनमिति ॥ यच्चमध्यरात्रमतिक्रम्यवि
ष्टेःपुच्छंयदाभवेत् ॥ प्रदोषेज्वालयेद्वह्निसुखसौभाग्यदा
यकम् ॥ प्रदोषान्मध्यरात्रान्तंहोलिकापूजनंशुभमिति
कैश्चिदलेखितदनाकारम् ॥ यदापूर्वरात्रौप्रदोषव्याप्त्य
भावस्तत्सत्वेऽपिवाभद्रारहितः कालोनप्राप्यतेउत्तरदि
नेचप्रदोषेपूर्णिमाऽभावस्तदाभद्रापुच्छेकार्यम् (तथाच
लल्लः) पृथिव्यांयानिकार्याणिशुभानित्वशुभानितु ॥ ता
निसर्वाणिसिद्ध्यन्तिविष्टिपुच्छेनसंशयइति (भद्रापुच्छ
न्तुज्योतिःशास्त्रेप्रसिद्धम्) अस्मिन्नेवविषयेउत्तरदिने
पूर्णिमासार्द्धयामत्रयमितातताऽधिकावा प्रतिपदश्चवृ
द्धिस्तदापूर्णिमोत्तरम्प्रतिपदिप्रदोषेहोलिकाकार्या ॥ न
तुपूर्वेद्युर्विष्टिपुच्छे ॥ सार्द्धयामत्रयम्पूर्णाद्वितीयेदिवसे
यदा ॥ प्रतिपद्वर्द्धमानातुतदासाहोलिकास्मृतेतिभवि
ष्योक्तेः ॥ यदातूत्तरदिनेप्रदोषैकदेशोऽस्तिपूर्वरात्रौचभ
द्रारहितानैवलभ्यतेसासुतरामुत्तरैव ॥ यदापूर्वरात्रिं
भद्राव्याप्ताउत्तरदिनप्रदोषेच चन्द्रग्रहणन्तदातत्रस्ना
त्वाकार्यम् ॥ स्नात्वाकर्माणिकुर्वीतश्रृतमन्नंविवर्ज्जये
दितिवचनात्॥फाल्गुनेमलमासश्चेच्छुद्धेमासिहोलिका

कार्यस्पष्टमासविशेषाख्यविहितं वर्ज्जयेन्मलमासके इतिवचनात् ( होलिकापूजामंत्रस्तु ) अष्टकूपाभ यत्रस्तैःकृतात्वंहोलिबालिशैः ॥ अतस्त्वांपूजयिष्या मिभूतेभूतिप्रदाभवेतिदिक् ( इतिपूर्णिमानिर्णयः अ थाऽमावास्या ) सासर्वत्रव्रतोपवासादावुत्तरा ॥ प्र तिपद्यप्यमावास्येतियुग्मवाक्यात् ॥ अमावास्यातृती याचताउपोष्याःपरान्विताइतिस्मृतेश्च ॥ भूतविद्धात्व मावास्यानग्राह्यामुनिपुङ्गवैरितिस्कांदे पूर्वविद्धानिषेधा च्च ॥ अस्यांसोमयोगेकपिलधारातीर्थेश्राद्धमुक्तंकाशी खण्डे ॥ अमासोमसमायोगेश्राद्धंयद्यत्रलभ्यते ॥ ती र्थेकपिलधारेऽस्मिन्गययापुष्करेणकिम् ॥ दिव्यान्तरि क्षभूतानियानितीर्थानिसर्वशः ॥ तान्यत्रैवनिवत्स्यन्ति दर्शेसोमदिनान्विते ॥ शुचौदेशेशुचिर्भूत्वास्थित्वापूर्वो त्तरामुखः॥ ॐकारेणैवमन्त्रेणसकृदेवकुशंस्पृशेत्॥ पूर्वो त्तराऐशानीउत्पाटनमन्त्रः॥ विरिंचिनासहोन्यन्नपरमे ष्ठिनिसर्गज॥ नुदसर्वाणिपापानिदर्भस्वस्तिकरोमम ॥ एतन्मन्त्रंसमुच्चार्य्यततःपूर्वोत्तरामुखः ॥ हुंफट्कारेण मन्त्रेणसकृच्छिन्नंसमुद्धरेदिति ( भाद्रामावास्यायांकु शग्रहणमाहहारीतः ) मासेनभस्यमावास्यातस्यांदर्भो च्चयोमतः ॥ अयातयामास्तेदर्भाविनियोज्याःपुनःपु नरिति (कार्त्तिकामावास्यायांकृत्यमुक्तमादित्यपुराणे) दिवातत्रनभोक्तव्यमृतेबालातुराज्जनात् ॥ प्रदोषसम येलक्ष्मींपूजयित्वायथाक्रमम् ॥ दीपवृक्षास्तथाकार्याः शक्त्यादेवगृहेषुच ॥ ब्राह्मणान्भोजयित्वाऽऽदौसंभो

ज्यचबुभुक्षितान् ॥ अलंकृतेनभोक्तव्यंनववस्त्रोपशो भिनेति ( तत्राप्यमावास्यायाम् ॥ ज्योतिर्निबन्धेऽपि ) तुलासंस्थेसहस्रांशौप्रदोषेभूतदर्शयोः ॥ उल्काहस्तान राःकुर्युःपितॄणांमार्गदर्शनामिति ॥ अप्रदोषस्यकर्मका लोक्तेः ॥ पूर्वेद्युरेवतद्व्याप्तौपूर्वैव ॥ उत्तरेद्युरेवोभयेद्यु र्वातथात्वेउत्तरैव (भविष्ये) कृत्वातुपार्वणंश्राद्धमित्यु क्त्वाततोऽपराह्णसमयइत्यादि ॥ दीपदानादेरुक्तत्वाद्दर्श श्राद्धोत्तरमेवकर्त्तव्यमितिनभ्रमितव्यम् ॥ नह्यत्रान योःक्रमोविधीयते ॥ किन्त्वखण्डाऽमायाएवप्रायोव्यव हार्यत्वेनप्राप्तत्वादनूद्यते ॥ उभयदिनेतद्व्याप्त्यभावेपू र्वैव ॥ गौणकालेसत्वात् (अथार्द्धोदयोभारते) अमा र्कपातश्रवणैर्युक्ताचेत्पुष्यमाघयोः ॥ अर्द्धोदयःसविज्ञे यःकोटिसूर्यग्रहैःसमः ॥ दिवैवयोगःशस्तोऽयंनतुरात्रौ कदाचन ( स्कांदे ) अर्द्धोदयेतुसम्प्राप्तेसर्वंगङ्गासमंज लम् ॥ शुद्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसंमिताः ॥ य त्किंचिद्दीयतेदानंमेरुमन्दरतत्समामिति ॥ तत्रैव ॥ च तुःषष्टिपलंमुख्यममत्रंतत्रकारयेत् ॥ चत्वारिंशत्पलंवा थपञ्चविंशतिमेववा ॥ निधायपायसंतत्रपद्ममष्टदलंलि खेत् ॥ पद्मस्यकर्णिकायान्तुकर्षमात्रंसुवर्णकम् ॥ तद भावेतदर्द्धंवातदर्द्धंवापिकारयेत् ॥ कृत्वातुतण्डुलैःशु द्धैःपद्ममष्टदलंस्मृतम् ॥ अमत्रेस्थापयेत्तत्रब्रह्मविष्णुशि वात्मकम् ॥ तेषांप्रीतिकरार्थायश्वेतमाल्यैःसुशोभनैः॥ वस्त्रादिभिरलंकृत्यब्राह्मणायनिवेदयेत् (मन्त्रश्च) सुव र्णपायसामत्रंयस्मादेतत्त्रयीमयम् ॥ आवयोस्तारकंय

स्मात्तद्गृहाणद्विजोत्तमेति ॥ समुद्रमेखलांपृथ्वींसम्य
ग्दत्त्वातुयत्फलम् ॥ तत्फलंलभतेमर्त्त्यःकृत्वादानमम
त्रकमिति (अमत्रंपात्रम् ॥ फाल्गुनामावास्यायांरुद्रादि
पूजा ॥ लैंगेफाल्गुनक्रमे ) अमावास्यातुसोमेनसप्त
मीभानुनातथा॥ चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी ॥
चतस्रस्तिथयस्त्वेताःसूर्यग्रहणसंनिभाः ॥ स्नानंदानं
तथाश्राद्धंसर्वंतत्राक्षयंभवेदिति ॥ तत्रैव ॥ श्रावणाद्यर्क
योगेऽव्यतीपातः ॥ श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्त
कैः ॥ अमाचेद्रविवारेणव्यतीपातःसउच्यते ॥ तत्रजप्तं
हुतंदत्तंसर्वंकोटिगुणंभवेदिति ॥ नागदैवताऽऽश्लेषा ॥
मस्तकंमृगशीर्षम् (अथश्राद्धामावास्यानिर्णयः॥ छन्दो
गपरिशिष्टे) पिण्डान्वाहार्यकंश्राद्धंक्षीणेराजनिशस्य
ते॥वासरस्यतृतीयेंऽशेनातिसन्ध्यासमीपकइति (पिण्ड
पितृयज्ञः) तमनुआह्रियतेतत् पिण्डपितृयज्ञानन्तरभा
वीतियावत् ॥ राजनिचन्द्रेतस्मिन्क्षीणेअमावास्याया
मित्यर्थः ॥ अत्रयद्यपिपूर्वाह्णोवैदेवानांमध्यदिनंमनुष्या
णामपराह्णः पितृणामितिश्रुत्यालोचनयात्रेधाविभक्त
स्याह्नोऽन्त्यभागएवप्रतीयते॥ तथापिसायाह्नस्त्रिमुहूर्त्तः
स्याच्छ्राद्धंतत्रनकारयेत् ॥ राक्षसीनामसाप्रोक्तागर्हि
तासर्वकर्मस्वितियेमनसायाह्नस्यश्राद्धकालत्वे प्रतिषि
द्धेऽर्थादेकादशमुहूर्तयोस्तत्कालत्वंसिद्ध्यति ॥ यत्तुदी
पिकाहेमाद्रिसिद्धांतउक्तस्त्रिधाशितदिनस्यांतेपराह्णेचरे
दितिसोऽप्येतत्परतयैवकथंचिद्व्याख्येयः॥माधवीयम
पराह्णपदमप्येवम्॥अष्टममुहूर्त्ताख्यकुतुपेआरंभोनवमे

रौहिणेसमाप्तिरितितुएकोद्दिष्टविषयम् ॥ कुतुपप्रथमे भागेएकोद्दिष्टमुपक्रमेत ॥ आवर्तनसमीपेवातत्रैवनि यतात्मवान्इतिव्यासोक्तेः ॥ आरभ्यकुतुपेश्राद्धंकुर्या दारौहिणंबुधः ॥ विधिज्ञोविधिमास्थायरौहिणंतुनलं घयेदितिश्लोकाद्गौतमोक्तेश्च ( यत्तुनारदेन ) मध्याह्न त्रिमुहूर्त्ततुयदाचलतिभास्करः ॥ सकालःकुतुपोनाम पितृणांदत्तमक्षयमिति ॥ मुहूर्त्तत्रयात्मकत्वंकुतुपस्यो क्तम् ॥ तद्दशममुहूर्त्तमर्वागारंभपरमितिकेचित् ॥ युक्तं तुएकोद्दिष्टंतुमध्याह्नइत्यादिनामुहूर्त्तत्रयात्मक मध्याह्न स्यैकोद्दिष्टकालतया विधानेऽष्टमनवममुहूर्त्तयोश्चतत्का लतयाविनियोगेऽवशिष्टस्यदशमस्योपयोगाकांक्षायामु त्तरभावितयागौणकालतापरत्वमिति ( यत्तुमात्स्ये ) अ ष्टमेभास्करोयस्मान्मंदीभवतिसर्वदा ॥ तस्मादनंत फलदस्तत्रारंभोविशिष्यते ॥ ऊर्द्ध्वंमुहूर्त्तात्कुतुपाद्य न्मुहूर्त्तचतुष्टयम् । मुहूर्त्तपंचकंह्येतत्स्वधाभवनमिष्य तइतितदेकोद्दिष्टपार्वणकालक्रीडाकाराभिप्रायम् ॥ पा र्वणेत्वेकादशद्वादशमुहूर्त्तयोरेव मुख्यकालत्वंनमुहूर्त्तत्र यस्य ॥ तत्रवैषम्येणैकदेशव्याप्तौस्मृत्यंतरे ॥ अप राह्नद्वयव्यापिन्यमावास्यायदाभवेत् ॥ तत्राल्पत्वम हत्वाभ्यांनिर्णयःपितृकर्मणीतिअधिकाराग्राह्येत्यर्थः ॥ एकदेशसमव्याप्तावुभयापराह्णव्याप्तौच खर्वदर्पादिना निर्णयः (तथाचशिवराघवसंवादेऽपि) अमावास्यातु याहिस्यादपराह्णद्वयेऽपिसा ॥ क्षयेपूर्वापरावृद्धौसाम्ये ऽपिचपरास्मृतेति (स्मृत्यंतरे) तिथिक्षयेसिनीवालीति

थिर्द्वयौकुहूर्मता ॥ साम्येचैवकुहूर्ज्ञेयावेदवेदांगवेदि भिरिति ॥ पूर्वासिनीवालीउत्तराकुहूः ॥ दृष्टचंद्रासि नीवालीनष्टचन्द्राकुहूर्मतेतिव्यासोक्तेः ॥ दिनद्वयेका लस्पर्शेजावालिः ॥ अपराह्णद्वयाव्यापीयदिदर्शस्तिथि क्षये ॥ आहिताग्नेःसिनीवालीनिरग्न्यादेःकुहूर्मतेति ॥ आदिशब्दात्स्त्रीशूद्रयोरपिग्रहणं ॥ सिनीवालाद्विजैःका र्यासाग्निकैःपितृकर्मणि ॥ स्त्रीभिःशूद्रैःकुहूर्ज्ञेयातथाचा नग्निकैर्द्विजैरितिलौगाक्षिवचनात् (इतिविशेषतिथयो निर्णीताः ॥ अथेष्टिकालः) साचपर्वप्रतिपत्सन्धौकार्या तदाहगोभिलः ॥ पक्षान्ताउपवस्तव्याः ॥ पक्षादयो यष्टव्याःसन्धिमभितोयजेतेति (उपवासोऽग्न्यन्वाधा नम्) तत्रातिसूक्ष्मतरेसन्धौयागानुष्ठानस्यअशक्यत्वा त्पूर्वदिनेपर्वणिआरम्भउत्तरदिनेच प्रतिपदियागसमा प्तिः (तथाचश्रुतिः) पूर्वेद्युरग्निंगृह्णातिउत्तरमहर्यजती तिपूर्वेद्युरिध्माबर्हिःकरोतियज्ञमेवालभ्यगृहीतोपवसतीति (तथाच) उपास्मिंच्छ्वोयक्ष्यमाणेदेवतावसंतियएवंवि द्वानग्निमुपस्तृणातीति ॥ तत्रपर्वप्रतिपदोःसंपूर्णत्वे संदेहएवनास्ति ॥ खंडत्वेतयोर्निर्णयमाहगोभिलः ॥ आवर्त्तनेयदासंधिःपर्वप्रतिपदोर्भवेत् ॥ तदहर्यागइ ष्येतपरतश्चेत्परेऽहनीति ॥ पर्वप्रतिपदोःसंधिरर्वागाव र्त्तनाद्यदि ॥ तस्मिन्नहनियष्टव्यंपूर्वेद्युस्तदुपक्रमः ॥ आवर्त्तनात्परःसंधिर्यदितस्मिन्नुपक्रमः ॥ परेद्युरि ष्टिरित्येषपर्वद्वयविनिश्चयइति ॥ आवर्त्तनंदि नमध्यम् ॥ अत्रसर्वापेक्षयायावतीप्रतिपदोवृद्धिःक्षयो

वातदर्द्धमानेनपर्वणो ह्रासंवृद्धिंवाकल्पयित्वासंधिर्निर्णे
यः ( यथाचकात्यायनः ) परेऽह्निघटिकास्तुयाःस्युर्न्यू
नास्तथावाऽप्यधिकास्तुतासाम् ॥ अर्द्धंवियोज्यचत
थाप्रयोज्यंह्रासेवृद्धौप्रथमेदिनेतदिति ( अत्रकेचित् )
यदिचतुर्दशदण्डापर्वचपञ्चदशदंडामिति ॥ यत्तुएकोन
विंशदंडातदाप्रतिपद्वृद्धेरर्द्धंदंडद्वयंपर्वांतेप्राप्तिपाति॥एवं
चतुर्दशीयदिपंचविंशतिदंडापर्वैकोनविंशदंडंप्रतिपच्चतु
र्दशदण्डातदाप्रतिपद्ध्रासार्द्धंसार्द्ध घटिकाद्वयंपर्वांतेप्नि
पंति ॥ तदुक्तंमीदृशेविषयेपर्वापेक्षयाप्रतिपदो ह्रासस्य
वृद्धेर्भावात्॥ प्रत्युतवृद्ध्युदाहरणेह्रासएवास्तिह्रासोदा
हरणेचवृद्धिः ॥ नहिघटिकान्यूनाधिक्यभावेह्रासवृद्धी
भवतः ॥ किंतुचतुर्दश्युत्तरंयावत्यः पर्वघटिकास्तत
आधिक्येन्यूनत्वेवाप्रतिपदोह्रासवृद्धीति ॥ एवमालो
च्यसंधिर्निर्णयः ॥ यदिप्रतिपद्दिनेपंचधाविभक्तादिनच
तुर्थभागरूपापराह्णव्यापीद्वितीयाप्रवेशेनचंद्रदर्शनंतदा
चतुर्दश्यामन्वाधानं संधिदिनेचयागः(तथाचवृद्धवशि
ष्ठः ) आदित्येऽस्तमितेचंद्रःप्रक्षीणउदियाद्यदि ॥ प्र
तिपद्यतिपत्तिःस्यात्पंचदश्यांयजेत्तदा ॥ अस्तमितेऽ
स्तासन्ने ॥ वृद्धशातातपः ॥ त्रिमुहूर्त्ताद्वितीयाचेत्प्रति
पद्यापराह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसोमदर्शना
त् (कात्यायनः) जलनीयेऽह्निसोमश्चेद्वारुण्यांदिशिदृ
श्यते ॥ तत्रव्याहृतिभिर्हुत्वादंडंदद्याद्द्विजातये ॥ ए
तानिवचनान्यपराह्णेऽमाप्रतिपत्संधिपराणीतिहेमाद्रिः
(तन्न) तन्मतेह्येतद्वचनगतापराह्णपदस्यद्वेधा विभक्त

दिनांत्यवाचित्वात्तत्रचसूर्यास्तात्प्राक्त्रिमुहूर्त्तादि तृती
याप्रवेशेनचंद्रदर्शनेसतिरात्रिसंधावपितथापत्तेः ॥ न
चापराह्णेसंधिशास्त्रेणैव कैमुतिकन्यायेन रात्रिसंधाव
पि परदिनेयागसिद्धौरात्रिसंधिशास्त्रमनर्थकंस्यात् ॥
अतश्चंद्रदर्शननिषेधबाधकतयै वरात्रिसंधिशास्त्रंसार्थक
मितिवाच्यम् ॥ अपराह्णशब्देनयोगवृत्त्याहर्वत्यावर्त्तनो
त्तरभागाभिनिधानेरात्रिसंधौकैमुतिकन्यायेनतच्छास्त्रा
प्रवृत्तेः ॥ अतोविनिगमनाविरहादेतानिवचनान्यावर्त्त
ते ततःपूर्वमुत्तरंवाऽमाप्रतिपत्संधौप्रवर्त्तते ॥ नपरा
ह्णसंधावेवेतियुक्तम् ॥ एषत्वानंतभाष्यशतपथसांख्या
यनभाष्याणामाशयः ॥ त्रिमुहूर्त्तशास्त्रस्यतुपंचधावि
भक्तचतुर्थभागरूपापराह्णेत्रिमुहूर्त्तमात्रसत्वे तत्रचन्द्र
दर्शनस्यव्यभिचारात् ॥ यत्तुकेचिच्चन्द्रदर्शनमेवयाग
निषेधप्रयोजकंनत्रिमुहूर्त्तद्वितीयाप्रवेशइति (तन्न) त्रि
मुहूर्त्ताइत्यादिपूर्वार्द्धस्यपाक्षिकानुवादकत्वापत्तेः ॥ ए
तच्चदिवासंधावेवप्रवर्त्ततेनरात्रिसंधौ ॥ अग्निमदि
नेतावतःपक्षस्यासम्भवात् ॥ एतद्गतोऽपराह्णशब्दोऽपि
यौगिकःसन् दिनद्वितीयाभागपरइतिचेन्न ॥ अपराह्ण
पदवैयर्थ्यापत्तेः ॥ यौगिकपारिभाषिकयोःपरिभाषासा
र्थक्ये पारिभाषिकग्रहणस्यैवयुक्तत्वाच्च ॥ संधिनिर्णये
तुद्वेधाविभक्तदिनपूर्वापरभागरूपयोः पूर्वाह्णपराह्णशब्द
योर्मध्याह्नशब्दस्यचयौगिकत्वमेव ॥ पूर्वोक्तगोभिल
वाक्येआवर्त्तनपदस्यावागावर्त्तनात्परतश्चेत्यनयोः पद
योश्चस्वरसात् ॥ यत्वेतत्प्रकरणेआवर्त्तनात्पूर्वाह्णेह्यप

राह्णस्ततःपरः ॥ मध्याह्नस्तुतयोःसंधिर्यदावर्त्तनमुच्यत इति ॥ तद्वोभिलोक्तमेवयौगिकमर्थमनुवदाति ॥ न त्वपूर्वपरिभाषायांविधत्ते ॥ येनत्रिमुहूर्त्तवाक्यमपिद्वेधा विभक्तदिनापरभागरूपमपराह्णमुपजीवेत्॥ अतोदिन मध्येयदाकदाचित्॥ संधौपरादिनेपंचधाविभक्तदिनच तुर्थभागरूपं सकलापराह्णव्यापि द्वितीयासत्वेनचतुर्द श्यामन्वाधानंसंधिदिनेचयागइति॥ एषचानिर्णयामृत मदनपारियातयोराशयोलक्ष्यते॥ इष्टिसमाप्तिश्चप्रतिप न्मध्यएवनपर्वमध्ये ॥ प्रतिपद्यप्रविष्टायांयदिचेष्टिःस माप्यते ॥ पुनःप्रणीयकृत्स्नेष्टिःकर्त्तव्यायागवित्तमैरि तिगार्ग्योक्तेः ॥ पौर्णमास्यांकदाचित्सद्यःकालविधौति थिरिति (आपस्तम्बः) पौर्णमास्यामन्वाधानपरिस्त रणोपवासाः सद्योपवासाद्यकालायाꣳसर्वंक्रियतइति (भाष्यार्थसंग्रहेऽपि)अन्वाहितिश्चास्तरणोपवासःपूर्वद्यु रेतेखलुपौर्णमास्याम्॥आवर्त्तनात्प्राग्यदिपर्वसन्धिस्तदै वयागःक्रियतेसमस्तइति (मण्डनः) आधानानन्तरा पौर्णमासीचेन्मलमासगा ॥ तस्यामारम्भणीयादीन्नकु र्वीतकदाचनेति ॥ सचमलमासोत्तरंशुद्धकालेकार्यः ॥ त त्रकालातिक्रमनिमित्ताविभ्रष्टेष्टिरप्यादौ कार्य्याततआ रम्भइतिकेचित् ( तन्न) पुरुषापराधकृताविहितकालाति क्रमरूपविभ्रष्टेष्टिनिमित्ताभावात्॥एवंप्रकृतेष्टेःकालोनि र्णीतः (विकृतिकालोऽपिश्रुतौ) यदीष्ट्यायदिपशुनायदि सोमेनयजेतसोऽ मावास्यायांपौर्णमास्यामेकस्याममा वास्यायाम्प्रयोगोपादानात्सद्यः कालीनत्वार्थश्चेतिनिर

णापितत्ररत्वे॥ नचेष्टिपशुसोमानामनेकेषामुद्देश्यत्वात्त न्निमित्तामावास्या पौर्णमास्योर्द्वयोर्विधिवत्त्वात्तन्निमि त्तश्चवाक्यभेदःस्यादितिवाच्यम् ॥ इष्टिपशुसोमेष्वनु गतस्य यागत्वस्यैकस्योद्देश्यत्वावच्छेदकस्यामावास्या पौर्णमास्यनुगतस्यचपर्वत्वस्याविधेय तावच्छेदकस्यैक स्यसद्भावात्तस्यपरिहर्तुंशक्यत्वात्॥ प्रकृतिविकृत्योरेक कालसन्निपातेनिर्णयमाहकात्यायनः॥आवर्त्तनात्प्राग्य दिपर्वसन्धिःकृत्वातुतस्मिन्प्रकृतेर्विकृत्याः ॥ तदैवया गःपरतोयदिस्यात्तस्मिन्विकृत्याःप्रकृतेःपरेद्युरिति॥ य शौकालनिर्णयमाहगोविन्दार्णवेकात्यायनः॥अर्द्धादह्नो भवतिनियतःपर्वसन्धिः परस्तात्कृत्वातस्मिन्नहनितुपशुं सद्यएवद्व्यहंवा ॥ आरभ्याथप्रकृतिरथचेत्पर्वसन्धिः पुरस्तात्कृत्वातस्मिन्प्रकृतिमथतुस्यात्पशुःसद्यएव(आ ग्रयणकालानाहापस्तम्बः) वर्षासुश्यामाकैर्यजेतशरदि व्रीहिभिर्वसन्तेयवैरिति (वार्त्तिककारोऽपि) यजेत्पूर्वंपौ र्णमासादूर्द्ध्वंदर्शान्नवेज्ययेति ॥ नवेज्याआग्रयणेष्टिः(दी पिकायाम्) दर्शेष्ट्याःपरसुक्रमाग्रयणकम्प्राक्पौर्णमा साच्चतदितिसम्पूर्णविशेषमाहलौगाक्षिः ॥ पत्न्यान्त त्कर्मनिर्वर्त्यवैश्वदेवश्चसाग्निकः ॥ पिण्डयज्ञन्ततःकु र्यात्ततोऽन्वाहार्य्यकम्बुधइति ॥ पत्न्यान्तमन्वाधानम न्वाहार्यकन्दर्शश्राद्धमितिदिक् ( इतीष्टिकालनिर्णयः अथपिण्डपितृयज्ञः॥ तत्रश्रुतिः) अमावास्यायामपरा ह्णेपिण्डपितृयज्ञेनचरन्तीति ॥ अत्रयःपरमोविप्रकर्षः सूर्यचन्द्रमसोःसपौर्णमासीयःपरमः सन्निकर्षःसामावा

स्येतिगोभिलोक्तेरमावास्यापदंयद्यपिसूर्यचन्द्रमसोः प
रमसन्निकर्षवत्यन्त्यक्षणेशक्तन्तथापितत्रकर्मानुष्ठानाश
क्तेस्तद्वदहोरात्रंलक्षयति ॥ अतएवयदहश्चन्द्रमसन्न
पश्यन्तितदहःपिण्डपितृयज्ञेनचयजन्तीतिसूत्रम् ॥ य
देवैषनपुरस्ताद्दृश्योनपश्चादथपितृभ्यो निर्वपतीतिचश्रु
तिःसङ्गच्छते ॥ अतोऽमावास्यातिथेरपराह्णव्याप्त्यभा
वेऽप्यन्त्यक्षणावच्छिन्नाहोरात्रएवपितृयज्ञः ॥ पूर्वदि
नापराह्णव्याप्तेस्त्वनारदइ त्याश्वलायनापस्तम्बसूत्रवृ
त्तिभाष्यकाराः (यौक्तिकन्तु) अमावास्याशब्दस्यप्रयो
गस्तावत्तिथिविशेषेसावर्जनीयोनिर्विवादः ॥ तत्रचैक
देशवर्त्तिनःपरमसन्निकर्षस्य सम्भवत्येवप्रवृत्तिनिमित्त
त्वञ्चक्रिपदमिवचक्रस्यवैश्वदेवपदमिवच विश्वेषांदेवा
नांयद्यपितिथिविशेषलक्षणातथापिनिरूढत्वात्सैवयुक्ता
नाहोरात्रवर्त्तित्वान्नविरुद्धम् ॥ अथपुरस्तादसार्थक्या
यतदेवविरुद्धन्तदापुरतात्पदसार्थक्यायसन्ध्युत्तराहोरा
त्रगतमपितत्तथास्यात् ॥ अतोऽपराह्णयुक्तैवामावास्या
ग्राह्यानतुसन्धेराग्रहइति॥ अपराह्णस्त्वत्रपञ्चधाविभक्त
दिनोपांत्योभागइतिवृत्तिकारोएव ॥ दिनद्वयेऽपराह्ण
स्पर्शाभावेतुपूर्वदिनएव ॥ तत्रस्मृत्यायदिचंद्रक्षयस्यो
त्तरदिनेच तादृश्याश्चंद्रवृद्धेःसत्वात् (यथाहहारीतः)
चतुर्दश्यष्टमेभागेक्षीणोभवतिचन्द्रमाः॥ अमावास्याऽ
ष्टमेभागे पुनःकिलभवेदलमिति ॥ पूर्वाह्णोवैदेवानांम
ध्यदिनंमनुष्याणामपराह्णःपितॄणामिति ॥ अस्यपितृय
ज्ञप्रकरणपाठात्त्रेधाविभक्तादिनांत्यभागस्तुयुक्तः॥ हा

रीतवचस्तूपवासपरम् ॥ तंप्रकृत्यापियदहरेवैषपुरस्तान्न पश्चाद्दृश्यतेइतिकातीयसूत्रात ॥ यायजूकास्तुवृत्तिभा ष्याद्युक्तंसंधिमदहोरात्रंप्रायः पंचधाविभावानुरुद्ध्याऽऽ चरंति ॥ तत्रकातीयानांतावत्पितृयज्ञोदर्शयागांतम् ॥ तत्पूर्वदिनएवतत्कार्यम् ॥ नतुनियमेनामायुक्तएवापरा ह्णेपूर्वेद्युः पितृयज्ञंनिष्क्रीणीयोत्तरमहर्देवान्यजतीतिश्रु तेः॥अमावास्यायामपराह्णइति॥ अमावास्यापदस्यकर्म परत्वाच्चयज्ञोंऽगंनवेतितुवादांतरमिति ॥ तैत्तिरीयादी नांतुनिर्विगानंसंधिमत्येवाहोरात्रेऽनुष्ठानम् ॥ आश्वला यनानांसर्वाधानिनांतावद्दक्षिणाग्निकपितृयज्ञोत्तरं पृथ गेवपार्वणम् ॥ पक्षांतंकर्मनिर्वर्त्यवैश्वदेवंचसाग्निकः ॥ पिंडयज्ञंततःकुर्यात्ततोऽन्वाहार्यकंबुधइतिवाक्यात् (प क्षांतमन्वाधानम्) अन्वाहार्यकंपार्वणश्राद्धम् ॥ तत्रब हिरग्निकंचेद्द्विप्रपाणौहोमः (तथाचपरिशिष्टम्) पर्वा मावास्यातत्रभवंपार्वणंतदाहिताग्निः पिंडपितृयज्ञंकरो त्यनाग्निस्तुतदितरेणव्यतिषज्येति ॥ आहिताग्निपार्व णेचपिंडपितृयज्ञकल्पाभावादभ्यनुज्ञायाःपाणिष्वित्ति॥ ब्राह्मणानांपाणिषुहोमइतिचआहिताग्निःसर्वाधानी ॥ अनाहिताग्निस्त्वर्द्धाधानी ॥ केवलस्मार्त्ताग्निमान्वेति सांप्रदायिकाः॥ अनयोस्तुयौक्तिककालनिर्णयपक्षे सर्व दाश्राद्धपितृयज्ञयोस्तत्रविशेषरूपोव्यतिषंगएव (कालै क्यात्) अग्नौकरणंचस्मार्त्ताग्नौ ॥ भाष्यवृत्तिसंप्र दायेतुसंपूर्णोऽपर्वणिव्यतिषंगएव ॥ कालैक्यादेवाखंड पर्वणितुपूर्वदिने पितृयज्ञीयचरुश्रयणादिसकलेति कर्त्त

व्यताकंश्राद्धम् ॥ परदिनेतुपितृयज्ञःकालभेदेनतंत्रन्या याप्रवृत्तेः ॥ एतेनपूर्वदिनएवव्यतिषंगइत्यापस्तम्ब कालभेदादेवापिंडयज्ञंततःकुर्यात्ततोऽन्वाहार्यकंबुध इति क्रमानुरोधेनपृथगनुष्ठानमप्यपास्तम् ॥ एकदिनीयेष्वे वक्ष्यंक्रमविधिराकांक्षितानियमाविधिसंभवेभिन्नदिनी येष्वनाकांक्षितापूर्वविधानायोगात् ॥ यद्यपिपूर्वदिनेवा र्षिकादिषुचचरुश्रयणादिकासर्वाऽपितृयज्ञेतिकर्त्तव्यता परतोभाति तथापियद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेनस हपीडार्थमुद्धृत्येति सूत्रस्यनात्रापूर्वःस्थालीपाकश्चोद्यते सर्वश्राद्धेषुप्रसंगात् (अनिष्टंचैतत्) तेनानुवादएवायं यत्रस्थालीपाको विहितस्तत्रतेनभुक्तशेषेणच पिंडनिर्व पणं यत्रतुस्थालीपाकविधिर्नास्ति तत्रशुक्तशेषेणैवकेव लेननिर्वपणंभवति (आचार्येणाष्टौश्राद्धान्युक्तानि) आ न्वष्टक्यंचपूर्वेद्युर्मासि मास्यथपार्वणम् ॥ काम्यमभ्युद येऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥ तत्रपूर्वेषुचतुर्षुस्थाली पाकादन्नमुद्धृत्याग्नौकरणम् ॥ अग्निसमीपेस्थालीपाके नभुक्तशेषेणचपिंडनिर्वपणम् ॥ पिंडपितृयज्ञकल्पस्यतेषुते षुविद्यमानत्वात् (तच्चसाधितमेवप्राक् ॥ उत्तरेषुचतुर्षु भोजनार्थतदपि पितृयज्ञकल्पप्राप्त्यभावाच्च ॥ तत्रा र्थोल्लेखाच्चतदभ्युक्षणंच सकृदाच्छिन्नावस्तरणंचले खांत्रिरुदकेनेत्यादि पत्नीप्राशनांतंचभवति ॥ अग्निप्र त्येयादितितुनभवति अन्यच्चातिप्रणयनादिसर्वंनभ वतीति वृत्तिग्रंथस्यालोचनेतुलेखांत्रिरुदकेनेत्यादिपत्नी प्राशनांतंचभवति युक्तंचेदमुक्तमितिकेचित् ॥ चरुश्रय

णादिप्राप्तौमानाभावात् ॥ अथाग्नौजुहोतियथोक्तंपुर
स्तादितिसूत्रमतिदेशार्थमितिचेन्न ॥ उद्धृत्यधृतक्रमतु
ज्ञापयत्यग्नौकरिष्येकरवैकरवाणीतिप्रत्यभिज्ञा ॥ क्रिय
तांकुरुष्वकुर्वितिसूत्रोत्तरमथेत्यादिसूत्रमुक्तम् ॥ अतोय
थोक्तमित्याद्युद्धरणोत्तरकाली नानेवमेवेत्त्णावदानादी
नतिदिशतिनप्राक्कालीनानपिश्रयणादीन् (यत्तु) यद्यद
न्नमुपभुक्तन्तत्तस्थालीपाकस्योद्धरणएव कर्मत्वेनान्ना
साहित्यन्नपिण्डार्थत्वेऽपि ॥ उद्धरणेतुतस्यप्रतिपाद्यत्व
मेव ॥ करणन्तूपभुक्तसजातीयमेवान्नम् ॥ अतोनपिण्ड
दानमपिचरुश्रयणप्रयोजकम् (वस्तुतस्तु) आन्वष्टक्यं
चपूर्वेद्युरित्याद्युक्त्वाचतुर्थाद्येषुसाग्नीनांवह्नौहोमो विधी
यतइत्याचार्येण पितृयज्ञातिदेशप्रसज्यमानाग्नेः श्राद्धां
तरेपरिसंख्यानात् ॥ पितृब्राह्मणहस्तेस्यादुत्तरेषुचतुर्ष्व
पीतित्वनुवादकंविधानेवाक्यभेदात् ॥ अग्न्यभावेतुवि
प्रस्यपाणावेवोपपादयेदितिमानवेनपाणिप्राप्तेश्चअभाव
स्त्वपरिग्रहनाशदेशान्तरेष्विवपरिसंख्यया व्यर्थविशि
ष्टः ॥ अष्टत्वंतुगृह्योक्तत्वेनोपाधिकम् ॥ एवमुत्तरा
द्धोक्तंचतुष्टयमपि ॥ प्राप्तपरिसंख्यात्वेऽप्ययंनत्रिदो
षः ॥ अत्रह्येवायन्तीत्यत्रैवशब्देन पञ्चपञ्चनखाभ
क्ष्याइत्यत्रैवचपदेनात्रापिचतुः पदेनश्रुत्यैवपरिसंख्या
नात् ॥ नचपरिसंख्यायकानुवादकयोर्वैपरीत्यम् ॥
अग्न्यभावनिमित्तकस्यपाणेः साग्निककर्तृकेष्वान्व
ष्टक्यादिचतुर्ष्वप्राप्तः ॥ साग्नीनामित्यस्यानुवाद
त्वायोगात् ॥ अग्नेःपरिसंख्यायांचतत्साध्यंचरुश्रय

णादिदूरंनिरस्तमेव ॥ इतिश्रीमच्छंकरभट्टात्मजभट्टनीलकृते भास्करेकालमयूखेइष्टयादिकालनिर्णयः ॥

---

अथग्रहणनिर्णयः (वृद्धगार्ग्यः) पूर्णिमाप्रतिपत्सं धौराहुःसम्पूर्णमण्डलम् ॥ ग्रसतेचन्द्रमर्कंश्चदर्शप्रति पदंतरे(वृद्धवशिष्ठः)गवांकोटिप्रदानेनसम्यग्दत्तेनयत्फ लम् ॥ गङ्गास्नानेतत्फलंस्याद्राहुग्रस्तेनिशाकरे ॥ दि वाकरेपुनस्तत्रदशसंख्यमुदाहृतमिति (भारते) गङ्गा स्नानंतुकुर्वीतग्रहणेचन्द्रसूर्ययोः ॥ महानदीषुचान्यासु स्नानंकुर्याद्यथाविधि ॥ गङ्गायाअलाभेअन्यासुस्नाना दिकुर्यादित्यर्थः (महानद्योब्राह्मे) गोदावरीभीमरथी तुंगभद्राचवेणिका ॥ तापीपयोष्णीविन्ध्यस्यदाक्षिणेतु प्रकीर्त्तिताः ॥ भागीरथीनर्मदाचयमुनाचसरस्वती ॥ विशोकाचवितस्ताचविंध्यस्योत्तरतःस्मृताः (महानद्य सम्भवेशङ्खः) वापीकूपतडागेषुगिरिप्रस्रवणेषुच ॥ न द्यांनदेदेवखातेसरसीषूद्धृताम्बुनि ॥ उष्णोदकेनवास्ना याद्ग्रहणेचन्द्रसूर्ययोः ॥ इहपूर्वाभावेउत्तरोऽनुकल्पः॥ (उक्तञ्चमार्कण्डेयेन) शीतमुष्णोदकात्पुण्यमपारक्यंप रोदकात् ॥ भूमिष्ठमनुद्धृतात्पुण्यंततःप्रस्रवणोदकम् ॥ ततोऽपिसारसंपुण्यंततःपुण्यंनदीजलम् ॥ तीर्थतोयंत तःपुण्यंमहानद्यंबुपावनम् ॥ ततस्ततोऽपिगङ्गांबुपुण्यं पुण्यततोऽबुधिः (व्यासोऽपि) सर्वंगङ्गासमंतोयंसर्वेव्या ससमाद्विजाः ॥ सर्वंभूमिसमंदानंग्रहणेचन्द्रसूर्ययोः ॥ उष्णोदकमातुरविषयम् ॥ आदित्यकिरणैःपूतंपुनःपूतं

चवह्निना ॥ अतोव्याध्योतुरःस्नायाद्ग्रहणेषूष्णवारि
णेतिव्याघ्रोक्तेः ॥ मासभेदेननदीनांपुण्यत्वम् (देवीपु
राणे) कार्त्तिकेग्रहणंश्रेष्ठंगंगायमुनसंगमे ॥ मार्गेतुग्रह
णंप्रोक्तंदेविकायांमहामुने ॥ पौषेतुनर्मदापुण्यामाघेसं
निहिताशुभा ॥ फाल्गुनेवरुणाप्रोक्ताचैत्रेपुण्यासरस्व
ती ॥ वैशाखेचमहापुण्याचन्द्रभागासरिद्वरा ॥ ज्येष्ठेतु
कौशिकीपुण्याआषाढेतापिनीनदी ॥ श्रावणेसिन्धुना
मातुतथाभाद्रेतुचन्द्रिका ॥ आश्विनेसरयूःश्रेष्ठातथापु
ण्यातुनर्मदेति (तत्रैव) गोदावरीमहापुण्याचन्द्रेराहुस
मन्विते ॥ सूर्येचराहुणाग्रस्तेतमोभूतेमहामुने ॥ नर्म
दातोयसंस्पर्शेकृतकृत्याभवन्तिते (क्षेत्रविशेषोऽपि)गं
गाकनखलंपुण्यंप्रयागःपुष्करंतथा ॥ कुरुक्षेत्रंमहापुण्यं
राहुग्रस्तेदिवाकरे (अत्रश्राद्धमुक्तंभारते) सर्वस्वेनापि
कर्त्तव्यंश्राद्धंवैराहुदर्शने ॥ अकुर्वाणस्तुनास्तिक्यात्पङ्के
गौरिवसीदति ॥ पङ्कइत्यादिरकरणेदोषइत्यर्थः ॥ तच्च
वमेनकार्यम् ॥आपद्यनग्नौतीर्थेचचन्द्रसूर्यग्रहेतथा॥आ
मश्राद्धंद्विजःकुर्याच्छूद्रःकुर्यात्सदैवहीतिशातातपोक्तेः
(तद्रात्रावपिस्नानाद्याहदेवलः) यथास्नानंचदानंचसू
र्यस्यग्रहणेदिवा ॥ सोमस्यापितथारात्रौस्नानंदानंवि
धीयते (अत्राशौचिनोऽपिस्नानाद्याहवृद्धवशिष्ठः) सू
तकेमृतकेचैवनदोषोराहुदर्शने ॥ तावदेवभवेच्छुद्धिर्या
वन्मुक्तिर्नदृश्यते ( वारविशेषफलातिशयमाहव्यासः )
रविग्रहःसूर्यवारेसोमेसोमग्रहस्तथा ॥ चूडामणिरिति
ख्यातस्तदानंतफलंभवेत् ॥ वारेष्वन्येषुयत्पुण्यंग्रहणे

चंद्रसूर्ययोः ॥ तत्पुण्यंकोटिगुणितंग्रस्तेचूडामणौस्मृत मिति (षट्त्रिंशन्मते) सर्वेषामेववर्णानांसूतकं राहुदर्शने ॥ स्नात्वाकर्माणिकुर्वीतश्रृतमन्नंविसर्ज्जयेत् ॥ पक्वमन्नन्त्याज्यंग्रहणोत्तरमपिनभुञ्जीतेत्यर्थः (इयश्चसूतकोक्तिः) स्नानार्थानान्यकर्मत्यागार्था (तदुक्तम्) स्मार्त्तकर्मपरित्यागोराहोरन्यत्रसूतकेइति (शिवरहस्ये) सूर्येन्दुग्रहणेयावत्तावत्कुर्याज्जपादिकम् ॥ न स्वपेन्नचभुञ्जीतस्नात्वाभुञ्जीतमुक्तयोरिति (फलविशेषोब्रह्मपुराणे) उपमर्देलक्षगुणंग्रहणेचन्द्रसूर्ययोः ॥ पुण्यङ्कोटिगुणंमध्येमुक्तिकालेत्वनन्तकमिति (दानमुक्तंमहाभारते) अयनेविषुवेचैवग्रहणेचन्द्रसूर्ययोः ॥ पात्रभूतायविप्रायभूमिन्दद्यात्सदक्षिणाम् ॥ यद्यपिपूर्वसर्वेभ्याससम।द्विजाइत्युक्तन्तथापितद्ब्राह्मणस्तुत्यर्थम् । दानस्यावश्यकत्वार्थश्चनतुपात्रत्यागेनयस्मैकस्मैचिद्दानप्रतिपादनार्थम् (पात्रलक्षणन्दानमयूखेवक्ष्यते।।अनुकल्पमाहबौद्धायनः) श्रोत्रियोऽश्रोत्रियोवापिपात्रंवाऽपात्रमेवच ॥ विप्रब्रुवोऽपिवाविप्रोग्रहणेदानमर्हतीति (भारते) भूमिर्गावःसुवर्णश्चधान्यंवायद्यदीप्सितम् ॥ तत्सर्वंग्रहणेदेयमात्मनःश्रेयइच्छता ॥ राहुदर्शनेस्नायाद्दानश्चकुर्यादित्यादिभिर्वाक्यैर्दर्शने स्नानादिविधीयते ॥ दर्शनश्चाक्षुषंतच्चस्वकीयमेवनिमित्तम्परकीयदर्शनस्यपरम्प्रतिनिमित्तत्वाभावात् ॥ एवञ्चायमर्थःसम्पद्यते॥स्वयंग्रहणेदृष्टेस्नानादिकर्त्तव्यंनमेघावृत्तेइत्याहुः (तदप्युक्तम्) एवंह्यन्धस्यस्नानादिनस्यात् (तथा)

नेदेतोद्यन्तमादित्यन्नास्तंयातङ्कदाचन॥ नोपरक्तन्न वारिस्थन्नमध्यन्नभसोगतमितिवाक्येनस्नातकानांग्रह णदर्शनेप्रतिषिद्धेतेषांस्नानादिनस्यात्॥ यदिपरन्तत्रे ष्टापत्तिःक्रियतेतथासति सूर्यग्रहोयदारात्रौदिवाचन्द्रग्र हस्तथा॥ तत्रस्नानन्नकुर्वीतदद्याद्दानन्नचक्वचिदितिनि षेधोऽनुपपन्नःस्यात्॥ रात्रौसूर्यग्रहणस्यजातस्यदिवा चन्द्रग्रहणस्यजातस्यदर्शनाभावे स्नानादेरप्राप्तत्वात् किञ्चयदिदृष्टंग्रहणंस्नानादेर्निमित्तन्तथा सत्युद्देश्यस्य ग्रहणस्यविशेषणंदर्शनंनविवक्षितंस्यात्॥ यस्योभयं हविरार्त्तिमार्च्छेदित्यत्रैवहविषउभयत्वम्॥ अतःके वलग्रहणमेवनिमित्तमितिवक्तव्यम्॥ तच्चज्ञातमेवनि मित्तंसर्वनिमित्तानांज्ञानमेवनैमित्तिकंप्रयोजकमितिवि ज्ञानेश्वरादिभिस्तत्रनिरूपितत्वात्॥ तच्चज्ञानंशास्त्री यमेवनलौकिकम्॥ नचैवद्वीपान्तरेजातम्॥ द्वीपान्तरेऽ पिप्रयोजकंस्यादितिवाच्यम्॥ द्वीपान्तरेजातस्यद्वीपा न्तरेरात्रिदिनजातत्वेनाप्रयोजकत्वात्॥ क्वचिद्देशेदृष्टं देशान्तरेचमेघच्छन्नन्तुभवत्येवप्रयोजकम्॥ नचराहु दर्शनइत्यनेनचाक्षुषमेवदर्शनंग्राह्यमितिवाच्यम्॥ अ ष्टमीरोहिणीयुक्तानिश्यर्द्धेदृश्यतेयदीत्यादिषु शास्त्रदृष्टेऽ पिदृशिप्रयोगदर्शनात्॥ तेनप्रत्यक्षदर्शनमेवस्नाननि मित्तमितिकेषांचित्प्रलापः॥ शास्त्रन्यायविरुद्धउपेक्ष णीयः (ग्रस्तविषयेमनुः) चंद्रसूर्यग्रहेनाद्यादद्यात्स्ना त्वाविमुक्तयोः॥ अमुक्तयोरस्तगयोर्दृष्ट्वास्नानंपरेऽह नि (भृगुरपि) ग्रस्तावेवास्तमानंतुरवींदूप्राप्नुतोयदा॥

तदापरेद्युरुदये स्नात्वाऽभ्यवहरेन्नरइति (वेधमाहव्यासः) नाद्यात्सूर्यग्रहात्पूर्वमह्निसायंशशिग्रहात् ॥ ग्रहकालेचनाश्नीयात्स्नात्वाऽश्नीयाद्विमुक्तयोः ॥ मुक्तेशशिनिभुञ्जीतयदिनस्यान्महानिशा(विशेषमाहवृद्धवशिष्ठः)ग्रहणंतुभवेदिंदोःप्रथमादधियामतः ॥ भुञ्जीतावर्त्तनात्पूर्वंपश्चिमेप्रथमादधः ॥ रवेस्त्वावर्त्तनादूर्ध्वमर्वागेवानिशीथतः ॥ चतुर्थेप्रहरेचेत्स्याच्चतुर्थप्रहरादधः ॥ रात्रौप्रथमयामोत्तरंग्रहणंचेन्मध्याह्नात्पूर्वंभुञ्जीत रात्र्यंतयामेचेद्रात्रिप्रथमयामात्पूर्वंभुञ्जीत ॥ दिनतृतीयप्रहरेचेद्रविग्रहस्तदापूर्वदिनस्यार्द्धरात्रात्प्राक्भुञ्जीत ॥ अह्नश्चतुर्थप्रहरेचेद्रविग्रहणंतदा ॥ रात्रेश्चतुर्थप्रहरादधोभुञ्जीत ॥ इदंवचनंनरात्रिभोजनपरम् ॥ किंतुसूर्यग्रहेपूर्वयामचतुष्टयं त्याज्यं चंद्रग्रहेतुयामत्रयमित्येवंपरमितिमाधवः (तथाचवृद्धगौतमः) सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयम् ॥ चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विना (बालादिविषयेमत्स्यः) अपराह्णेनमध्याह्नेमध्याह्नेनतुसङ्गवे ॥ भुञ्जीतसंगवेचेत्स्यान्नपूर्वंभुजिमाचरेत् ॥ शशिग्रहेयामत्रयापवादमाहवृद्धवशिष्ठः ॥ ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाचरेदिति (वेधांतरंहेमाद्रौ) त्रयोदश्यादितोवर्ज्यंदिनानांनवकंध्रुवम् ॥ मङ्गलेषुसमस्तेषुग्रहणेचंद्रसूर्ययोरिति (अन्यत्रापि) द्वादश्यादिस्तृतीयांतोवेधइन्दुग्रहेस्मृतः ॥ एकादश्यादितःसौरेश्चतुर्थ्यंतःप्रकीर्त्तितः (इदंसंपूर्णग्रहे) खंडग्रहेतुउभयोर्दिनत्रयम् ॥ त्र्यहंखंडग्रहेतयोरितिवच

नात् (अत्रकाम्योपवासमाहदक्षः) अयनेविषुवेचेति ग्रहणंचंद्रसूर्ययोः ॥ अहोरात्रोषितःस्नात्वासर्वपापैःप्र मुच्यतइति ॥ पुत्रवद्गृहस्थस्यतुनभवति ॥ संक्रांत्या मुपवासंचकृष्णैकादशवासरे ॥ चंद्रसूर्यग्रहेचैवनकुर्या त्पुत्रवान्गृहीति (अत्रहेमाद्रिः) यदाशशिनोग्रस्तोदयः सूर्यस्यग्रस्तास्तोवातदापुत्रवद्गृहिणउपवासोन कर्त्त व्यः ॥ सायाह्नेग्रहणंचेत्स्यादपराह्णेनभोजनम् ॥ अपरा ह्णेनमध्याह्नेमध्याह्नेनतुसंगवइति मार्कण्डेयवाक्यस्यैत त्परत्वादित्याह माधवस्तस्याप्यभोजनमित्याह (युक्तंचै तत्)तत्प्रयुक्तोपवासस्यानिषेधोऽयमुदाहृतइति वाक्यशे षेणविहितकाम्योपवासस्यैवनिषेधोनानुषंगप्राप्तस्य ॥ नानुषंगकृतोग्राह्यो यतोनित्यमुपोषणमितिवाक्यात् ॥ ननुतत्प्रयुक्तत्वंनतदुद्देशेन विहितत्वं किंतुतद्धेतुकत्वमा त्रम् ॥ तद्धेतुकत्वंचानुषंगप्राप्तेऽप्युपवासेऽस्तीतिचेदु च्यते ॥ इहव्रतरूपोपवासस्यैवप्रतिषेधोनानुषंगप्राप्त स्य ॥ तत्रैवोपवासशब्दस्यशक्तत्वात् ॥ अन्यथोपवा सव्रतंचरेदित्यादिषु व्रतशब्दसाहचर्यात्संकल्पसिद्धाव पिकेवलोपवासविधिषुसंकल्पासिद्धेः ॥ भोजनद्वयनिवृ त्तावुपवासशब्दस्तुलाक्षणिकः ॥ गौणमुख्ययोर्मुख्यस्यै वग्रहणौचित्यात् ॥ ग्रहणभोजने प्रायश्चित्तमुक्तंका त्यायनेन ॥ चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्येनशुद्ध्यति ॥ त स्मिन्नेवदिनेभुक्त्वात्रिरात्रेणैवशुद्ध्यतीति ॥ तस्मिन् दिनेपूर्वोक्तप्रतिपादितयामात्मकवेधमध्येइति (इतिग्र हणनिर्णयः) (अथसंक्रांतिर्निर्णीयते ॥ तत्रनागरखंडे)

रवेःसंक्रमणेराशौसंक्रांतिरितिकथ्यते (वशिष्ठः)अयनेद्वे विषुवेद्वेचचतस्त्रःषडशीतयः ॥ चतस्रोविष्णुपद्यश्चसंक्रांत्योद्वादशस्मृताः॥झषकर्कटसंक्रांतीद्वेतूदग्दक्षिणायने॥ विषुवतीतितुलामेषौतयोर्मध्येततोपरा ॥कन्यायांमिथुनेमीनेधनुष्यथरवेर्गतिः।षडशीतुमुखीप्रोक्ताषडशीतिगुणाफलैः॥ वृषवृश्चिककुम्भेषुसिंहेचैवयदारविः॥एतद्विष्णुःपदंनामविषुवादधिकंफलमिति।वारर्क्षविशेषतःपुनरासांसप्तधात्वमुक्तंदेवीपुराणे ॥ मंदामंदाकिनीध्वांक्षीघोराचैचमहोदरी ॥ राक्षसीमिश्रिताप्रोक्तासंक्रान्तिःसप्तधानृप ॥ सूर्येघोराविधौध्वांक्षीभौमवारेमहोदरी ॥ बुधेमन्दाकिनीनामामन्दासुरपुरोहिते॥ मिश्रिताशुक्रवारेस्याद्राक्षसीतुशनैश्चरे (तथा) मन्दाध्रुवेषुविज्ञेयामृदौमन्दाकिनीतथा ॥ क्षिप्रेध्वांक्षीविजानीयादुग्रेघोराप्रकीर्तिता ॥ चरैर्महोदरीज्ञेयाक्रूरैर्क्षैश्चराक्षसी ॥ मिश्रिताचैवनिर्दिष्टामिश्रितर्क्षैश्चसंक्रमइति ॥ ध्रुवाणिरोहिण्युत्तरात्रयश्च ॥ मृदूनिरेवतीचित्रानुराधामृगाः ॥ क्षिप्रान्यश्विनीहस्तपुष्याः ॥ उग्राणिपूर्वात्रयम्भरणीमघाच ॥ चराणिधनिष्ठापुनर्वसुश्रवणस्वातीशततारकाः ॥ क्रूराणिज्येष्ठार्द्राश्लेषामूलानि ॥ मिश्रितानिविशाखाकृत्तिके (आसुचपुण्यतमःकालस्तत्रैवोक्तः) त्रिंश्चतुःपञ्चसप्ताष्टनवद्वादशएवच ॥ क्रमेणघटिकाह्येतास्तत्पुण्यम्पारमार्थिकमिति (वशिष्ठः) संक्रान्तिसमयःसूक्ष्मोदुर्ज्ञेयःपिशितेक्षणैः ॥ तद्योगाच्चाप्यधश्चोर्ध्वंत्रिंशन्नाड्यःपवित्रिताइति ॥ अधस्त्रिंशदूर्ध्वञ्चत्रिंशादितिकेचित्

(वस्तुतस्तु) अधःपञ्चदशोर्द्ध्वंपञ्चदशेत्येवंत्रिंशदितिज्ञे
यम् (तथाचदेवीपुराणे) अतीतानागतोभोगोनाड्यःपं
चदशस्मृताः ॥ संक्रान्तौविहितप्रतिषिद्धस्नानाध्यय
नादेःपालनम्भोगः (जाबालिः) संक्रान्तौपुण्यकालस्तु
षोडशोभयतःकलाइति (कलानाड्यः) एषांचवशिष्ठा
दिवाक्यानामविशेषात्सर्वसंक्रान्तिपरत्वम् ॥ तत्रचाल्प
कालोक्तिःपुण्यातिशयेनोक्त्यर्थानपुनर्नियमार्थः (अतए
वशातातपः) यायाःसन्निहितानाड्यस्तास्ताःपुण्यतमाः
स्मृताइति (वशिष्ठः) मध्येतुविषुवेपुण्यंप्राग्विष्णौदक्षि
णायने ॥ षडशीतिमुखेऽतीतेअतीतेचोत्तरायणेइति ॥
अत्रचशब्दादुत्तरायणेनागतेऽपिपुण्यमितिहेमाद्रिः ॥
तत्रप्रमाणंविमृश्यम् (ब्रह्मवैवर्त्ते) त्रिंशत्कर्कटकेनाड्यो
मकरेतुदशाधिकाइति ( गौतमः ) अर्वाक्षोडशनाड्य
स्तुपरतःषोडशैवतु ॥ताएवदक्षिणेपूर्वाअतीतेचोत्तरा
यणइति ॥ अत्रापिन्यूनाधिकघटिकानांपूर्वोक्तैवव्यव
स्थाविज्ञेया (वशिष्ठः) वर्त्तमानेतुलामेषेनाड्यस्तूभयतो
दशइति (बौद्धायनोऽपि) पुण्यंविषुवतिप्रोक्तन्दशपूर्वा
दशापराइति (वशिष्ठः) षडशीत्यांव्यतीतायांषष्टिरुक्ता
स्तुनाडिकाइति ॥ षडशीत्याख्यानांचतसृणांसंक्रांती
नामेकैकस्याःपञ्चदशपञ्चदशेत्येवंषष्टिनाड्यःपुण्याइति
हेमाद्रिः (तथाचस्कान्दे) षडशीतिमुखेऽतीतेनाड्यःप
ञ्चदशस्मृताइति (ब्रह्मवैवर्त्ते) विषुवेषण्मुहूर्त्तस्यात्षड
शीतिमुखेत्रयम् ॥ तथाविष्णुपदेत्रीणिपुण्यानिकवयो
विदुरिति ॥ एवमुक्तन्यूनाधिकपक्षाःपुण्यपुण्यतरपुण्य

तमत्वेनव्यवस्थाप्या: ॥ यायाःसंन्निहितानाड्यस्तास्ता
पुण्यतमाःस्मृताइतिपूर्वोदाहृतशातातपवाक्यात् (गो
भिलः) रात्रौसंक्रमणेभानोर्दिवाकुर्यात्तुतत्क्रियाम् ॥पूर्व
स्मात्परतोवापिप्रत्यासन्नेचतत्फलम् ॥ अर्द्धरात्रादध
स्तस्मिन्मध्याह्नस्योपरिक्रिया ॥ उद्र्ध्वसंक्रमणेचोद्र्ध्व
मुदयात्प्रहरद्वयम् ॥ पूर्णेचेदर्द्धरात्रेतुयदासंक्रमतेरविः॥
प्राहुर्दिनद्वयंपुण्यंमुक्त्वामकरकर्कटाविति ॥ मध्याह्नआ
वर्त्तनन्तच्चोदयश्चपूर्वोत्तरादिनयोःसंन्निधानलाभात् ॥
दिनद्वयमप्यर्द्धमेवज्ञेयम् ॥ रात्रौसंक्रमणेभानोर्दिनार्द्धं
स्नानदानयोरितिवाशिष्ठेनसामान्यतो रात्रिसंक्रमेदि
नार्द्धपुण्यत्वस्यैवोक्तत्वात् (गार्ग्यः) कालेन्यूनेऽर्द्धरात्रे
षुयदासंक्रमणंरवेः ॥ तदहःपुण्यमिच्छन्तिगार्ग्यगाल
वगौतमाः (देवीपुराणे) सम्पूर्णेअर्द्धरात्रेतुउदयेऽस्तम
येऽपिच ॥ मानार्द्धम्भास्करेपुण्यमपूर्णेशर्वरीदले ॥ स
म्पूर्णेअर्द्धरात्रेनिशीथेइत्यर्थः ॥ उदयास्तमयशब्दौप्रा
तःसायंसन्ध्योपलक्षकौ ॥ अपूर्णेशर्वरीसायम्प्रातःसं
ध्योत्तरपूर्वभागयोरित्यर्थः ॥ योगेनलक्षणयावाभा
स्करादिवसःनिशीथेसायंप्रातः सन्ध्ययोस्तदुत्तरपूर्वभा
गयोश्चसंक्रमेदिनार्द्धंपुण्यमित्यर्थः ॥ कस्यदिनस्या
र्द्धमित्यपेक्षायामुक्तंतत्रैव ॥ अर्द्धरात्रेत्वसम्पूर्णेदिवापु
ण्यमनागतम् ॥ सम्पूर्णेउभयोर्ज्ञेयमातिरेकेपरेऽहनि ॥
अत्रासम्पूर्णार्द्धरात्रशब्देन सायंसन्ध्यानिशीथपूर्वभाग
श्चगृह्यते ॥ अत्रसंक्रमणेऽनागतमतीतमित्यर्थः ॥ तद्दि
वामानार्द्धंपुण्यंतच्चोत्तरसंनिधानात् ॥ सम्पूर्णेउभयोरि

स्यन्नव्यवस्थोक्ता (तत्रैव) आदौपुण्यंविजानीयाद्यभिन्ना तिथिर्भवेत् ॥ अर्द्धरात्रेऽप्यतीतेतुविज्ञेयमपरेऽहनीति ॥ पूर्वदिनोत्तरार्द्धवर्त्तितिथ्यर्द्धरात्रातिथिर्दिनद्वयार्द्धयोरपि स्यात्तदापूर्वभोगिनीषुपूर्वदिनोत्तरार्द्धसुत्तरभोगिनीषूत्त रदिनाद्यार्द्धमुभयभोगिनीष्वैच्छिकोविकल्पः एवमयना तिरिक्तसर्वरात्रिसंक्रमणेदिनार्द्धपुण्यत्वेस्थिते ॥ विष्णु पाद्येधनुर्मीननृयुक्कन्यासुवैयदा ॥ पूर्वोत्तरंगतंरात्रौ भानोःसंक्रमणंभवेत् ॥ पूर्वाह्णेपञ्चनाड्यस्तुपुण्याःप्रो क्तामनीषिभिः ॥ अपराह्णेचपञ्चैवश्रौतेस्मार्त्तेचकर्मणी तिपाद्मम् ॥ तत्पुण्यातिशयदर्शनार्थम् ॥ केचित्त्वासन्न संक्रमंपुण्यंदिनार्द्धस्नानदानयोः ॥ रात्रौसंक्रमणेभानो र्विषुवत्ययनेदिनमिति ॥ वैशेषिकयज्ञपार्श्ववचनात् ॥ सामान्यविषयंदिनार्द्धवचनंविषुवद्विषयमित्याहुः॥विषु वतिसंक्रमेरात्रौसातीदिनार्द्धमयनेतुदिनमितिवाक्यार्थः (वस्तुतस्तु) यद्यत्रविषुवतीदिनार्द्धपुण्यत्वविधिःस्यात्त दास्यात्तथा ॥ नन्वेवंकिन्तुविषुवतिसामान्यवाक्यप्राप्त मर्थमनूद्यायनेदिनार्द्धापवादेनसम्पूर्णदिनस्यपुण्यत्वंवि धीयतइति॥ यद्वाऽऽद्यपादत्रयेणसर्व्वसंक्रान्तिषुसामा न्यतोदिनार्द्धम्पुण्यमित्येवान्वेति ॥ नत्वासन्नसंक्रमाभि तिअतएव (भविष्योत्तरे) मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ॥ प्रभातेवानिशीथेवाकुर्य्यादहनिपूर्व तः ॥ कार्मुकंतुपरित्यज्यझषंसंक्रमतेरविः ॥ प्रदोषेवा र्द्धरात्रेवास्नानदानंपरेऽहनीति (बौद्धायनोऽपि) अस्तं गतेसवितरिमकरंयातिभास्करः ॥ प्रदोषेवार्द्धरात्रेवा

स्नानंदानंपरेऽहानि ॥ अर्द्धरात्रेतदूर्द्ध्वंवासंक्रान्तौदक्षि
णायने ॥ पूर्वमेवदिनंग्राह्यंयावन्नोदयतेरविरिति ॥ अ
हंतुब्रुवे अदिनइतिच्छेदः ॥ अयनेरात्रौयातेसत्यदिनेरा
त्रावेवपुण्यमित्यर्थः ॥ तच्चनागरतैलंगादिपरम् ॥ तेषां
तथाचारात् (अतएवमाधवः) कर्कटेमकरेरात्रावप्याचा
राद्नुष्ठितिरिति (माधवस्तु) दिनइतिदिवेतिवापाठमभि
प्रेत्यविषुवतिरात्रौयातेदिनार्द्धंपुण्यमयनेतुरात्रौ संक्रम
णेसातिदिवसार्द्धंपुण्यंकर्कटे पूर्वार्द्धंमकरेतूत्तरार्द्धमिति
व्याचख्यौ ॥ ननुबौद्धायनीयेऽस्तंगतइत्यनेनप्रदोषार्द्ध
रात्रयोर्लब्धत्वात्पृथग्ग्रहणमनर्थकमितिचेन्न ॥ अस्तं
गतइत्येवोक्तेदिनांतरस्यपुण्यतोक्तिः ॥ प्रत्यासत्तेरपररा
त्रविषयिण्येवस्यात्तद्वारणाय प्रदोषार्द्धरात्रग्रहणसार्थ
क्यात् ॥ धनुर्मीनावतिक्रम्यकन्यांचमिथुनंयदा ॥ पूर्वा
परविभागेनरात्रौसंक्रमतेरविः ॥ दिनान्तेपञ्चनाड्यस्तु
तदापुण्यतमाःस्मृताः ॥ उदयेचतथापञ्चदैवेपित्र्येचक
र्मणीति ॥ रात्रौधनुरतिक्रम्यपूर्वभागेसंक्रमेउदयेपञ्च
नाड्यः ॥ तथारात्रौमिथुनमतिक्रम्यपरभागेसंक्रमेदि
नान्तपञ्चनाड्यइतिसामान्यतोबौद्धायनवाक्येन पुण्य
प्राप्तौपुण्यतमत्वबोधकम्॥तेनमकरेसूर्यास्तादूर्द्ध्वंयदा
कदाचिज्जातेउत्तरादिनपूर्वार्द्धम् ॥ आद्याःपंचघटिकाः
पुण्यतमाः ॥ कर्केचोदयात्पूर्वंयदाकदाचिज्जातेपूर्वादि
नएवोत्तरार्द्धंपुण्यम् ॥ अन्त्याःपञ्चघटिकाःपुण्यतमाइ
तिबौद्धायनवाक्यकृतनिर्णयानुरोधेनस्कांदंविभज्यव्या
चख्युस्तातचरणाः ॥ बौद्धायनेनायनयोर्विप्रकृष्टदिनपु

गयत्वोक्तावपिस्कांदेनसंनिकृष्टदिनेऽपि पुण्यताबोध्यते
केचित्त्वत्रातिक्रमणतृपाचेतिद्वेक्रियेतत्रधनुरादीनामति
क्रमणक्रियायांकर्म्मत्वे एतद्वाक्यस्यायनविषुवपरतया
बौद्धायनभविष्योत्तरवचोविरोधः स्याच्चप्रधानसंक्रा
मणक्रियाकर्माध्याहारः ॥ अतोधनुरादीनांप्रधानसंक्र
णक्रियायामेवकर्मत्वम् ॥ अतिक्रमणक्रियायांतुवृश्चि
कादीनान्तेनतत्पदानामेवाध्याहारः ॥ अतोवृश्चिककु
म्भसिंहवृषातिक्रमेणधनुरादिषडशीतिसंक्रमपरमेतद्वा
क्यम् ॥ नायनविषुवपरम् (तेननकोऽपिविरोधः ॥ व
स्तुतस्तु) बौद्धायनेनायनयोर्विप्रकृष्टदिनपुण्यत्वोक्ताव
पिस्कान्देनसन्निकृष्टदिनेऽपिपुण्यताबोध्यते ॥ तेनोभ
यदिनेऽपिसमुचितेपुण्यकालेनकोऽपिविरोधः॥ तेनस्का
न्दस्यस्वारसिक्येचव्याख्यायुक्तेतिममप्रतिभाति (इ
तिसंक्रान्तिनिर्णयः॥ अथसंक्रान्तिकृत्यम् ) शातात
पः॥ रविसंक्रमणेप्राप्तेनस्नायाद्यस्तुमानवः॥ सप्तजन्मा
निरोगीस्यान्निर्द्धनश्चैवजायते ॥ संक्रान्तौयानिदत्तानि
हव्यकव्यानिदातृभिः ॥ तानिनित्यन्ददात्यर्कःपुनर्ज्ज
न्मनिजन्मनीति (वशिष्ठः) अयनेषुतुयच्चोक्तंषडशी
तिमुखेषुच ॥ चन्द्रसूर्योपरागेचदत्तम्भवतिचाक्षयम्॥
अयनेकोटिपुण्यश्चलक्षंविष्णुपदीफलम् ॥ षडशीतिस
हस्रन्तुषडशीत्यांस्मृतम्बुधैः॥ शतमिन्दुक्षयेदानंसहस्र
न्तुदिनक्षये ॥ विषुवेशतसाहस्रंव्यतीपातेस्वनन्तकम्
(वृद्धवशिष्ठः) अयनेविषुवेचैवत्रिरात्रोपोषितःपुमान् ॥
स्नात्वाथोऽर्चयतेभानुंसर्वकामफलंलभेत् (ब्रह्मपुराणे)

शुक्लपक्षेतुसप्तम्यांयदासंक्रमतेरविः ॥ महाजयातदासै
वसप्तमीभास्करप्रिया ॥ स्नानन्दानञ्जपोहोमःपितृदेवा
दिपूजनम् ॥ सर्वङ्कोटिगुणंप्रोक्तन्तपनेनमहौजसा ॥
यस्तस्यांमानवोभक्त्याघृतेनस्नापयेद्रविम् ॥ सोऽश्व
मेधफलंप्राप्यततःसूर्यपुरंव्रजेत् ॥ पयसास्नापयेद्यस्तुभा
स्करम्भक्तिमान्नरः ॥ विमुक्तःसर्वपापेभ्योयातिसूर्य
स्यलोकताम् ॥ मयैषाकथितापुण्यासप्तमीत्रिपुरान्तक॥
यामुपोष्यनरोभक्त्याअचलान्मङ्गलाँल्लभेत् ( संक्रांति
विशेषेणदेयविशेषमाहविश्वामित्रः ) मेषसंक्रमणे
भानोर्मेषदानंमहाफलम् ॥ वृषसंक्रमणेदानङ्गवांप्रोक्तं
तथैवच ॥ वस्त्रान्नपानयानानिमिथुनेविहितानितु ॥ घृ
तधेनुप्रदानन्तुकर्कटेपरिशस्यते ॥ ससुवर्णपात्रदानंसिं
हेचविहितंसदा ॥ कन्याप्रवेशेवस्त्राणांसुरभीणांतथैव
च ॥ तुलाप्रवेशेधान्यानांबीजानामेवचोत्तमम् ॥ कीट
प्रवेशेवस्त्राणांयानानांचमहत्फलम् ॥ झषप्रवेशेदारूणां
दानमग्नेस्तथैवच ॥ कुंभप्रवेशेदानंतुगवामंबुतृणस्यच॥
मीनप्रवेशेह्यम्लानमालानामपिचोत्तमम् ॥ दानान्यथै
तानिमयाद्विजेन्द्राःप्रोक्तानिकालेतुनरःप्रदत्वा ॥ प्राप्नो
तिकामंमनसस्त्वभीष्टंतस्मात्प्रशंसंतिहिकालदानम् ॥
(स्कांदे) धेनुंतिलमयींराजन्दद्याद्यश्चोत्तरायणे ॥ स
र्वान्कामानवाप्नोतिविंदतेपरमंसुखम् (विष्णुधर्मोत्तरे)
उत्तरेत्वयनेविप्रवस्त्रदानंमहाफलम् ॥ तिलपूर्वमनड्वा
हंदत्वारोगैःप्रमुच्यते ( कालिकापुराणे ) कनकंकुलिशं
नीलंपद्मरागंचमौक्तिकम् ॥ एतानिपंचरत्नानिन्यस्ये

देवस्यमूर्द्धनि ॥ रत्नानांचाप्यभावेतुकर्षंकर्षार्द्धमेवच॥
सुवर्णंयोजयित्वातुतस्मिन्नेवोत्तरायणे ॥ विधिवच्चचत
थाभ्यर्च्यगव्येनाज्येनभूरिणा ॥ प्रक्षाल्यमर्दयित्वातु
प्रदद्याद्घृतकंबलम् ॥ दत्वाचोपस्करंभूयोब्राह्मणानन्य
तिभिःसह ॥ संभोज्यदक्षयित्वातु कल्पयेदनिवारित
म् ॥कुलिशंहीरकम्॥ दक्षयित्वादाक्षिणायासंयुज्य ॥
कल्पयेद्भोजनमितिशेषः ॥ उपोष्यसर्वमेवैतत्कुर्याद्भ
क्तिपुरःसरः ॥ पञ्चगव्यंतिलैर्युक्तंपीत्वावैपारयेत्स्वयम्॥
तिलैःस्नानंप्रकुर्वीततैरेवोद्वर्त्तनंबुधः ॥ देवतानांपितृणां
चउभाभ्यान्तर्पणन्तथा ॥ पारयेत्पारणंकुर्यात् ॥ ति
लस्नानपारणयोर्नात्रक्रमोविवक्षितः ॥ उभाभ्यामिति
तादर्थ्येचतुर्थी ॥ होमन्तैश्चप्रकुर्वीतसर्वदैवोत्तरायणे॥
तान्वैदेवायपित्र्येभ्योहाटकेनसमन्ददे ॥ यत्नादेवकरो
त्येवश्चित्तंशम्भौनिवेशयेत् ॥ उत्तरायणमासाद्यनरःक
स्मात्सशोच्यते (इतिसंक्रान्तिकृत्यम्॥ अथपक्षः) स
चद्विविधः ॥ शुक्लःकृष्णश्च ॥ चन्द्रकलावृद्ध्युपलक्षितः
शुक्लः॥क्षयोपलक्षितःकृष्णः॥दैवेशुक्लः॥पित्र्येकृष्णः(तदा
हमाधवः)दैवेमुख्यःशुक्लपक्षःकृष्णःपित्र्योविशिष्यतइति
श्रुतिः॥तौपूर्वपक्षश्चापरपक्षश्चभवेताम्॥ पूर्वपक्षन्देवा
अन्वसृज्यन्त॥अपरपक्षमन्वसुराइति(इतिपक्षनिर्णयः।
अथमासः) सचमस्यतेपरमीयतेचन्द्रवृद्धिक्षयादिनेति
व्युत्पन्नेनमासशब्देनरूपोऽभिधेयः॥ सचत्रेधाचान्द्रः॥
सावनः ॥ सौरश्चेति (तदुक्तंमाधवीयेब्रह्मसिद्धान्ते)
चान्द्रःशुक्लादिदर्शान्तःसावनस्त्रिंशतादिनैः॥ एकराशौ

रविर्यावत्कालंमासःसभास्करइति ॥ नाक्षत्रमपिमासं केचिदिच्छन्तीतिमाधवीयेमदनरत्ने (एषांव्यवस्थामाह ज्योतिर्गर्गः) सौरोमासोविवाहादौयज्ञादौसावनःस्मृतः ॥ आब्दिकेपितृकार्येचचान्द्रोमासःप्रशस्यते ॥ तत्रब्राह्मणस्यचान्द्रएवमुख्यः ( तदुक्तम्ब्रह्मसिद्धान्ते ) अमावास्यापरिच्छिन्नो मासःस्याद्ब्राह्मणस्यतु ॥ संक्रान्तिपौर्णमासीभ्यान्तथैवनृपवैश्ययोः ( पितामहोऽपि) दैवेकर्मणिपित्र्येचमासश्चान्द्रमसःस्मृतइति (यतिधर्मप्रकरणेतु) ऋतुसन्धिषुवापयेदितिवचनात्पूर्णिमायांवपनंकुर्वन्ति ॥ तस्माद्दर्शान्तत्वपूर्णिमान्तत्वयोः समोविकल्पोदृश्यते ॥ अनुष्ठानेतत्रतत्रवचनविशेषाच्छिष्टाचाराच्चव्यवस्थाद्रष्टव्येतिमाधवः ॥ अतःसम्भवेत्पौर्णमासीयोगेष्वमान्त्येचचैत्रादिपदंमुख्यम् ॥ पूर्णिमान्तसौरयोस्तुगौणंएवंमासपदमपि ॥ इन्द्राग्नीयत्रहूयेतेमासादिःसप्रकीर्त्तितः ॥ अग्नीषोमौस्थितौमध्येसमाप्तौपितृसोमकावितिशङ्क्यिग्राहकवाक्यात् ॥ दर्शान्तानांपूर्णिमांतानाञ्च मासविशेषाणाञ्चैत्रादिसंज्ञानच्चत्रप्रयुक्ताः ॥ सास्मिन्पौर्णमासीतिसंज्ञायामित्यनुशासनात् ॥ तेनयस्मिन्मासेपौर्णमासीकदाचिच्चित्रायुक्तासचैत्रः ॥ एवंवैशाखादयोऽपि (इतिमासनिर्णयः ॥ अथचैत्रकृत्यम् ) भविष्योत्तरे ॥ चैत्रेत्रिरात्रनक्ताशीनद्यांस्नात्वाददातियः ॥ अजाःपयस्विनीःपञ्चदरिद्रायकुटुम्बिने ॥ नजायतेपुनरसौजीवलोकेकदाचन (तत्रैव) चैत्रेमासेतुसम्प्राप्तेयःकुर्यान्नक्तभोजनम् ॥ पिष्टन्तुपय

सायुक्तम्भुञ्जानःशालिसम्भवम्॥ पूजयेत्पार्वतींशक्त्या कृत्वावैचन्दनस्यच ॥ गन्धपुष्पोपहारैश्चविंशार्द्धभुज संमिताम्॥ देवींज्वालामुखींनाम्नाकुंकुमागुरुचन्दनैः॥ धूपंसागुरुकर्पूरम्भगवत्यैनिवेदयेत् (वामनपुराणे) चैत्रेमासिविचित्राणिशयनान्यासनानिच ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेष्वपि (मात्स्ये) वर्ज्जयित्वामधौयस्तुदधिक्षीरघृतैक्षवम्॥ दद्याद्वस्त्राणिसूक्ष्माणि रसवस्त्रयुतानिच ॥ संपूज्यविप्रमिथुनङ्गौरीमेप्रीयतामिति (इतिचैत्रकृत्यम्॥अथवैशाखकृत्यम्) विष्णुस्मृतौ॥ तुलामकरमेषेषुप्रातःस्नायीभवेन्नरः ॥ हविष्यंब्रह्मचर्यञ्चमहापातकनाशनमिति (पद्मपुराणे) वैशाखेविधिना स्नानंदेवनद्यादिकेबहिः ॥ हविष्यंब्रह्मचर्यञ्चभूशय्या नियमस्थितिः॥ व्रतन्दानन्दमोदेवीमधुसूदनपूजनम्॥ अपिजन्मसहस्रोत्थंपापन्दहतिदारुणमिति (तथा) मधुमासस्यशुक्लायामेकादश्यामुपोषितः ॥ पञ्चदश्याञ्च भोवीरमेषसंक्रमणेरवेः ॥ प्रातःसनियमःस्नामिप्रीयतां मधुसूदन ॥ मधुहन्तृप्रसादेनब्राह्मणानामनुग्रहात् ॥ निर्विघ्नमस्तुमेपुण्यंवैशाखस्नानमन्वहम् ॥ माधवेमेषगेभानौमुरारेमधुसूदन ॥ प्रातःस्नानेनमेनाथफलदोभवपापहन् ॥ इत्युक्त्वाचार्यविधिवत्स्नायात् ॥ एवंस्नानाशक्तौ (तत्रैव) त्रयोदश्याञ्चतुर्दश्यांवैशाख्यांवादिनत्रयम् ॥ अपिसम्यग्विधानेननारीवापुरुषोऽपिवा॥ प्रातःस्नातःसनियमःसर्वपापैःप्रमुच्यतइति (तथा) कण्डूयपृष्ठतोगान्तुस्नात्वापिप्पलतर्पणम् ॥ कृत्वागोविन्दम

भ्यर्च्चयन्नदुर्गतिमवाप्नुयात् (पिप्पलतर्पणंपिप्पलमूलेसेच
नम् ) अर्चनेऽपिविशेषस्तत्रैव ॥ माधवंसकलंमासन्तुल
स्यायोऽर्चयेन्नरः॥ त्रिसन्ध्यंमधुहन्तारन्नास्तितस्यपुनर्भ
वइति(भारते)निस्तरेदेकभक्तेनवैशाखेयोजितेन्द्रियः॥
प्रातःस्नायीनरःस्त्रीवाज्ञातीनांश्रेष्ठतांव्रजेत् (वामनपुरा
णे) वैशाखेऽप्यूषलवणंवर्ज्जयित्वाचगोप्रदः ॥ भूत्वा
विष्णुपदेकल्पंस्थित्वाराजाभवेदिह ( नृसिंहप्रसादेपद्म
पुराणे) तीर्थेचानुदिनंस्नानन्तिलैश्चपितृतर्पणम् ॥ दा
नन्धर्मघटादीनांमधुसूदनपूजनम् ॥ माधवेमासिकुर्वी
तमधुसूदनतुष्टिदम् (अपरार्केवामनपुराणे) गन्धाँश्च
माल्यानितथावैशाखेसुरभीणिच ॥ देयानिद्विजमुख्ये
भ्योमधुसूदनतुष्टये ( उद्यापनञ्चतत्रैवोक्तम् ) मासमे
कम्बहिःस्नात्वानद्यादौविमलेजले ॥ एकादश्यांचद्वाद
श्याम्पौर्णमास्यामथापिवा ॥उपोष्यनियतोभूत्वाकुर्यादु
द्यापनम्बुधः॥ मण्डपङ्कारयेदादौकलशन्तत्रविन्यसेत्॥
निष्केणवातदर्द्धेनतदर्द्धेनाथवापुनः॥ शक्त्याचकारयेद्दे
वंसौवर्णलक्षणान्वितम्॥ लक्ष्मीयुतंजगन्नाथंपूजयेदास
नेबुधः॥भूषणैश्चंदनैःपुष्पैर्दीपैर्नैवेद्यसंचयैः॥ एवंसंपूज्य
विधिवद्रात्रौजागरणंचरेत्॥श्वोभूतेकृतमैत्रोऽथग्रहवेद्यां
ग्रहान्यजेत्॥ होमंकुर्यात्प्रयत्नेनपायसेनविचक्षणः॥ ति
लाज्येनयवैर्वापिसर्वैर्वापिस्वशक्तितः ॥ अष्टोत्तरसहस्रं
वाशतमष्टोत्तरंतुवा॥प्रातर्विष्णुरनेनैवइदंविष्णुरनेनवा॥
व्रतसंपूर्णसिद्ध्यर्थंधेनुमेकांपयस्विनीम् ॥ पादुकोपानहौ
च्छत्रंगुरवेव्यजनंतथा ॥ शय्यांसोपस्करांदद्याद्दीपिकांद

र्पणंतथा॥ ब्राह्मणान्भोजयेत्त्रिंशत्तेभ्योदद्याच्चदक्षिणाम् ॥ कलशाञ्जलपूर्णांश्चतेभ्योदद्याद्यवांस्तथा ॥ एवं कृतेमाधवस्यउद्यापनविधौशुभे ॥ फलमाप्नोतिसकलं विष्णुसायुज्यमाप्नुयात् ॥ वैशाखस्यमलत्वेऽपितत्रैव स्नानादिसमाप्यमितिहेमाद्रिमदनौ (तथाचकाठकगृह्ये) आरब्धंमलमासात्प्राक्यत्काम्यमसमापितम् ॥ संप्राप्तेमलमासेऽपितत्समाप्यमसंशयमिति (इतिवैशाखोद्यापनविधिः ॥ अथज्येष्ठकृत्यम्भविष्योत्तरे) पिष्टेनपङ्कजंकृत्वाज्येष्ठेमासिसवेदिकम् ॥ पुष्पैःसंपूज्यगंधाद्यैर्नानावस्त्रैर्विभूषितैः ॥ वर्षकोटियुगंसाग्रंसूर्यलोकेमहीयते ॥ पङ्कजोब्रह्मा (वामनपुराणे) उदकुंभांबुधेनुश्चतालवृंतञ्चचन्दनम् ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्येष्ठमासिच (इतिज्येष्ठकृत्यम् ॥ अथाषाढकृत्यम् ॥ वामनपुराणे) उपानद्युगलंछत्रंलवणामलकानि च ॥ आषाढेवामनप्रीत्यैदातव्यानीहभक्तितः (भारते) आषाढमेकभक्तेनास्थित्वामासमतन्द्रितः ॥ बहुधान्योबहुधनो बहुपुत्रश्चजायते (इत्याषाढकृत्यम् ॥ अथचातुर्मास्यव्रतानिभविष्योत्तरे) स्त्रीवानरोवामद्भक्तोधर्मार्थेसुदृढव्रतः॥ गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकम् ॥ तेषांफलानिवक्ष्यामितत्कर्त्तॄणांपृथक्पृथक् ॥ मधुरस्वरोभवेद्राजापुरुषोगुडवर्ज्जनात् ॥ तैलस्यवर्ज्जनाद्राजन्सुन्दरांगःप्रजायते ॥ कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् (तथा) योगाभ्यासीभवेद्यस्तुसब्रह्मपदमवाप्नुयात् ॥ कटुकाम्लतिक्तमधुरक्षार

काषायसंचयम् ॥ योवर्ज्जयेत्सवैरूप्यंदौर्गंध्यंनाप्नुया त्क्वचित् ॥ तांबूलवर्ज्जनाद्भोगीअपक्वादमलोभवेत् ॥ पादाभ्यङ्गपरित्यागाच्छिरोऽभ्यंगविवर्ज्जनात् ॥ दीप्ति मान्दीप्तकरणोयच्चोद्रव्यपतिर्भवेत् ॥ इन्द्रातिथित्व माप्नोतिस्थालीपाकस्यवर्ज्जनात् ॥ लभतेसंततिंदीर्घां तैलपक्वविवर्ज्जनात् ॥ भूमौप्रस्तरशायीचर्वारोमुनिव रोभवेत् ॥ सदामुनिःसदायोगीमधुमांसविवर्ज्जनात् (तथा) एकांतरोपवासेनब्रह्मलोकेमहीयते॥ मौनव्र तीभवेद्यस्तुतस्याज्ञाबलिताभवेत् ॥ भूमौभुंक्तेसदाय स्तुसपृथिव्याःपतिर्भवेत् ॥ नमोनारायणायेतिजपन् यज्ञफलंभवेत् ॥ पादाभिवंदनाद्विष्णोर्लभेद्गोदानजंफ लम् ॥ विष्णुपादाब्जसंस्पर्शाद्दिनपापात्प्रमुच्यते ॥ पादोदकाभिषेकाद्वैगङ्गास्नानंदिनेदिने ॥ विष्णुदेवा लयेकुर्यादुपलेपनमार्ज्जने ॥ कल्पस्थायीभवेद्राजासन रोनात्रसंशयः ॥ प्रदक्षिणशतंयस्तुकरोतिस्तुतिपाठ कः ॥ हंसयुक्तविमानेनसचविष्णुपुरंव्रजेत् ॥ गीतवा द्यकरोविष्णोर्लोकंगांधर्वमाप्नुयात् ॥ नित्यंशास्त्रसमा ख्यानाल्लोकान्यस्तुप्रबोधयेत् ॥ व्यासस्तुष्यतितस्या शुविष्णुलोकंसगच्छति ॥ कृत्वाप्रेक्षणकंविष्णोर्लोकम प्सरसांलभेत् ॥ तीर्थाम्बुस्नपनाद्विष्णोर्निर्मलंदेहमा प्नुयात् ॥ पञ्चगव्याशनात्पार्थचांद्रायणफलंलभेत् ॥ अयाचितेनप्राप्नोतिपुत्रधर्मानशेषतः ॥ षष्ठान्नकालभो क्तायः कल्पस्थायीभवेद्दिवि ॥ उपवासद्वयांतरितभ क्तः ॥ शिलोंच्छकेनभुञ्जानःप्रयागस्नानमाप्नुयात् ॥

पर्णेषुयोनरोभुंक्तेकुरुक्षेत्रफलंलभेत् ॥ यामद्वयंजलत्या
गान्नरोगैरभिभूयते ॥ गुडवर्ज्जीनरोदद्यात्तद्भूतंचान्न
भाजनम् ॥ सहिरण्यंनृपश्रेष्ठलवणस्याप्ययंविधिः (ब्र
ह्मवैवर्त्ते) एकभक्तंनरःकृत्वानित्यस्नायीदृढव्रतः॥ योऽ
र्चयेच्चतुरोमासान्वासुदेवसमीपभाक् ॥ यस्तुसुप्तेहृषी
केशेनक्तमाचरतेव्रती ॥ वस्त्रयुग्मंनरोदत्वाशिवलोके
महीयते ॥ अपूपवर्ज्जनंकृत्वाभोजनेव्रतमाचरेत् ॥ का
र्त्तिकेस्वर्णगोधूमान्वस्त्रंदत्वाऽश्वमेधभाक् ॥ अन्नंदत्वा
चविप्रायब्रह्मलोकमवाप्नुयात् ॥ एकांतरोपवासेन
विष्णुपूजनतत्परः ॥ गांदत्वावासुदेवस्यलोकेसम्पूज्य
तेनरः ॥ यस्तुसुप्तेहृषीकेशेक्षितिशायीभवेन्नरः ॥ श
य्यांसोपस्करांदत्वाइन्द्रलोकेमहीयते ॥ वार्षिकांश्चतुरो
मासान्मद्यंमांसंचयस्त्यजेत् ॥ स्वर्णदोहरिमुद्दिश्यस
भवेद्वेदविद्द्विजः ॥ क्षपयेत्कृच्छ्रपादेनआषाढादिचतुष्ट
यम् ॥ विष्णुपूजनकृन्मर्त्यःसभवेत्तन्निकेतनः ( व्रतांत
कृत्यंतत्रैव ) समाप्तौभोजयेद्विप्रान्भक्त्यादद्याच्चदक्षि
णाम् (तथा) समाप्तेगोयुगंदद्याद्दत्वाविप्रायभोजनम् ॥
(तथा) समाप्तौगोवृषंदद्याद्वस्त्रंकांचनसंयुतम् ( तथा )
व्रतान्तेचतथादद्याद्गामेकांचपयास्विनीम् ( तथा ) समा
प्तौवस्त्रयुग्मंतुवस्त्रंदद्याद्द्विजातये इति ( तथा ) व्रतांते
विप्रमिथुनंपूजाधेनुसमन्वितम् ॥ वृत्तान्हिरण्मयान्द
द्यात्सोऽश्वमेधफलंलभेदिति ॥ एतेषांचपक्षाणांशक्ति
तोव्यवस्था ( चतुर्मासेनिषिद्धान्युक्तानिभविष्ये ) सुप्ते
यस्मिन्नवर्त्तन्तेक्रियाःसर्वाःशुभादयः ॥ विवाहव्रतबन्धा

दिचूडासंस्कारवीक्षणम् ॥ यज्ञागृहप्रवेशाश्चप्रतिदैवत
भूभृताम् ॥ पुण्यानियानिकर्माणिनस्युःसुप्तेजगत्पतौ॥
वीक्षणमपूर्वदेववीक्षणम् ॥ पुण्यानियानिकर्माणिज्यो
तिष्टोमादीनि (इतिचातुर्मास्यविधिः॥ अथनदीनांरजो
दोषः) तत्रतावन्नद्योद्विविधाः॥ महत्योऽल्पाश्चेति (तथा
चब्रह्मपुराणे) गोदावरीभीमरथीतुङ्गभद्राचवेणिका ॥
तापीपयोष्णीविंध्यस्यदक्षिणेतुप्रकीर्त्तिताः॥ भागीरथी
नर्मदाचयमुनाचसरस्वती ॥ विशोकाचवितस्ताचविं
ध्यस्योत्तरतःस्थिताः॥ द्वादशैतामहानद्योदेवर्षिक्षेत्रस
म्भवाइति (एतदन्याअल्पास्ततोऽप्यल्पागर्त्ताः) तथा
चस्मृतिसंग्रहे ॥ धनुःसहस्राण्यष्टौवागतिर्यासांनविद्य
ते॥ नतानदीशब्दवहागर्त्तास्तेपरिकीर्त्तिताइति (तत्रम
हत्सुभविष्योत्तरे)आदौतुकर्कटेदेविमहानद्योरजस्वलाः
त्रिदिनंतुचतुर्थेऽह्निशुद्धाःस्युर्जाह्नवीतथेति (देवलः) ग
ङ्गाचयमुनाचैवप्लक्षजातासरस्वती ॥ रजसानाभिभू
यंतेचान्येनदसंज्ञकाः॥ शोणसिंधुहिरण्याख्याःकोक
लोहितघर्घराः॥ शतद्रूश्चतदासप्तपावनाःपरिकीर्त्तिताः
(स्मृतिसंग्रहे) तपनस्यसुतागङ्गागौतमीचसरस्वती ॥
रजसानाभिभूयंतेवेणीचनदसंज्ञिता (निगमः) गङ्गाधर्म
द्रवःपुण्यायमुनाचसरस्वती ॥ अन्तर्गतरजोदोषाःसर्वा
वस्थासुचामलाः (एवंच) प्रथमंकर्कटेदेवित्र्यहंगङ्गारज
स्वला (तथा) कर्कटादौरजोदुष्टागोमतीवासरत्रयम् ॥
चन्द्रभागासतीसिंधुःसरजूर्नर्मदातथा ॥ इत्यादियत्तद
न्तर्गतरजोदोषविषयम् (अल्पनदीषुविशेषान्तरमाहदे

वलः) नभोनभस्ययोर्मध्येसर्वानद्योरजस्वलाः ॥ तासु स्नानंनकुर्वीतदेवर्षिपितृतर्प्पणम् (अत्रिश्च) सिंहकर्कट योर्मध्येसर्वानद्योरजस्वलाः ॥ नस्नानादीनिकर्म्माणिता सुकुर्व्वीतमानवः ॥ नचैतयोःसर्वानद्यइत्यविशेषोक्त्या महानदीविषयत्वमपीतिवाच्यम् ॥ सिंहकर्कटयोर्मध्येस र्वानद्योरजस्वलाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्र गाइति (व्याघ्रपादोक्तेः) अल्पनदीष्वृतुर्विधिर्मात्स्ये ॥ यावन्नोदेतिभगवान् दक्षिणाशाविभूषणः ॥ तावद्रजोव हानद्यःकरतोयाःप्रकीर्त्तिताइति ॥ करतोयाअल्पोदकाः कात्यायनेनत्वत्रोक्तोविशेषः ॥ याःशोषमुपगच्छन्तिग्री ष्मेकुसरितोभुवि ॥ तासुप्रावृषिनस्नायादपूर्णेदशवास रेइति ( रजोदोषश्चनतत्तीरवासिनाम् ) नतुतीरवा सिनामितिनिगमोक्तेः (विशेषान्तरम्मत्स्यपुराणे) पु ण्यांभसासमायोगाद्दुष्टमप्यम्बुपावनमिति (भारतेच)अ पवित्रमपिप्राप्यगंगांयातिपवित्रताम् ॥ रजोयुतनदीज लपानेप्रायश्चित्तंस्मृतिसंग्रहे ॥ कालेनभस्यशुद्धंस्या त्त्रिरात्रंतुनवोदकम् ॥ अकालेतुदशाहंस्यात्पीत्वानाद्या दहान्निशामिति (भविष्ये) महदम्बुसमंवापियदतिष्ठत्पु रातनम्॥नवाम्बुमिश्रितंतेनतद्दुष्टमितिसूरयः(योगियाज्ञ वल्क्याः) रजोदुष्टेऽम्भसिस्नानंवर्ज्यंनद्यादिषुद्विजैः ॥ क दर्थितंरजस्तेषांसन्ध्योपासनतर्प्पणम् (तथा) अजागो र्महिषीचैवब्राह्मणीचप्रसूतिका ॥ भूमेर्नवोदकंचैवदशरा त्रेणशुद्ध्यति ॥ हृतनूतनकूपाद्युदकमपिनवोदकम् (व्या घ्रपादः) अभावेकूपवापीनामनपायिपयोभृताम् ॥ रजो

दुष्टेऽपिपयसिग्रासभोगेनदुष्यति (वशिष्ठः) उपाकर्मणि चोत्सर्गेप्रेतस्नानेतथैवच ॥ चन्द्रसूर्य्यग्रहेचैवरजोदोषो नविद्यतइति (अथश्रावणकृत्यम् ॥ भारते) श्राव णंनियतोमासमेकभक्तेनयःक्षिपेत् ॥ यत्रतत्राभिषेकेण पूज्यतेज्ञातिवर्द्धनः (वामनपुराणे) घृतंचक्षीरकुंभा श्चघृतपक्वंफलानिच ॥ श्रावणेश्रीधरप्रीत्यैदातव्यानि दिनेदिने (इतिश्रावणकृत्यम् ॥ अथभाद्रपदकृत्य म्) भारते ॥ प्रौष्ठपद्यांतुयोमासमेकाहारोभवेन्नरः ॥ धनाढ्यःस्फीतमैश्वर्यमरुतांप्रतिपद्यते (अथभाद्रकृ त्यम्) वामनपुराणे॥ मासिभाद्रपदेदद्यात्पायसंमधुस र्पिषी ॥ हृषीकेशप्रीणनार्थंलवणंसगुडोदनम् (इतिभाद्र कृत्यम् ॥ अथाश्विनकृत्यम्) यमः ॥ घृतमाश्वयुजेमा सिनित्यंदद्याद्द्विजातये ॥ प्रीणयित्वाश्विनौदेवौरूपभा गतिजायते (वामने) तिलास्थिरांगंवृषभंदधिताम्ररसा दिकम् ॥ प्रीत्यर्थंपद्मनाभस्यदेयमाश्वयुजेनरैः (भारते) तथैवाश्वयुजंमासमेकभक्तेनयोनयेत् ॥ प्रजावान्बहुपु त्रश्चवाहनाढ्यश्चजायते (इत्याश्विनकृत्यम् ॥ अथका र्त्तिककृत्यम्) विष्णुः॥ कार्त्तिकंसकलंमासंनित्यस्नायी जितेंद्रियः ॥ जपन्हविष्यभुग्दांतःसर्वपापैःप्रमुच्यते ॥ जपःस्वेष्टदेवतामंत्रस्यगायत्र्यावा ॥ एतच्चशक्तिपरम् ॥ (अशक्तस्यतूक्तंकाशीखण्डे) वाराणस्यांपंचनदेत्र्यहंस्ना तास्तुकार्त्तिके ॥ अमीतपुण्यपुरुषःपुण्यभाजोऽतिनिर्म लाः (स्नानकालश्लोकः ॥ तत्रैव) कार्त्तिकेविंदुतीर्थेयो ब्रह्मचर्यपरायणः ॥ स्नास्यत्यनुदितेभानौभानुजात्तस्य

भीः कुतः (भानुजाद्यमात् ॥ तत्रैवस्नानमंत्रः) कार्त्तिके ऽहंकरिष्यामिप्रातःस्नानंजनार्दन ॥ प्रीत्यर्थंतवदेवेश दामोदरमयासह ॥ इमंमंत्रंसमुच्चार्य्यमौनीस्नायाद्व्रती नरइति (अर्घमंत्रश्चतत्रैव) व्रतिनःकार्त्तिकेमासिस्नात स्यविधिवन्मम ॥ दामोदरगृहाणार्घ्यंदनुजेंद्रनिषूदन ॥ स्नानेनैमित्तिकेकृष्णकार्त्तिकेपापशोषणे ॥ गृह्णात्वर्घ्यं मयादत्तंराधयासहितोभवान् ॥ इमौमंत्रौसमुच्चार्य्य योऽर्घ्यंमह्यंप्रयच्छति ॥ सुवर्णरत्नपुष्पाम्बुपूजासंख्ये नपुण्यवान् ॥ सुवर्णपूर्णपृथिवींसंकल्प्योदकपूर्वकम् ॥ तेनदत्ताभवेत्सद्यःसुपात्रायसुपर्वणीति (पाद्मे) तुलसी दललक्षेणकार्त्तिकेयोऽर्चयेद्धरिम् ॥ पत्रेपत्रेमुनिश्रेष्ठमौ क्तिकंलभतेफलम् (तत्रैव) कुरुक्षेत्रेकोटिगुणोगंगायाम पितत्समः ॥ ततोऽधिकःपुष्करेस्याद्द्वारावत्यांचभार्ग व ॥ दुर्लभःकार्त्तिकोविप्रामथुरायांनृणामिहेति (स्कां देकार्त्तिकमाहात्म्ये) धात्रीच्छायेतुयःकुर्यात्पिण्डदानं महामुने ॥ मुक्तिंप्रयांतिपितरःप्रसादान्माधवस्यतु ॥ (दानमाहवामनः) राजतंकनकंदीपान्मणिमुक्ताफला दिकम् ॥ दामोदरस्यप्रीत्यर्थंप्रदद्यात्कार्त्तिकेनरः (च न्द्रप्रकाशेवर्षदर्पणे) विप्रवेश्मनियोदद्यात्कार्त्तिकेमा सिदीपकम् ॥ अग्निष्टोमफलंतस्यप्रवदंतिमनीषिणः ॥ चतुष्पथेषुरथ्यासुब्राह्मणावसथेषुच ॥ वृक्षमूलेषुगोष्ठे षुकांतारगहनेषुच ॥ दीपदानाद्धिसर्वत्रमहाफलमवा प्नुयात् ॥ उच्चैःप्रदीपमाकाशेयोदद्यात्कार्त्तिकेनरः ॥ सर्वंकुलंसमुद्धृत्यविष्णुलोकमवाप्नुयादिति (मंत्रोऽपि

तत्रैव) अवसानेषुदीपानांब्राह्मणान्भोजयेच्छुचिः ॥ गाणपत्यंसलभतेदीप्यतेचरविर्यथेति (भारते) कार्त्ति केतुनरोमासंयःकुर्यादेकभोजनम् ॥ शूरश्चबहुवीर्यश्च कीर्त्तिमांश्चैवजायते (काशीखण्डे) कृच्छ्रंवाचातिकृ च्छ्रंवाप्राजापत्यमथापिवा ॥ संप्राप्तेकार्त्तिकेमासिकुर्या च्छक्त्यातिपुण्यवान् ॥ एकांतरंव्रतंकुर्यात्त्रिरात्रव्रतमे ववा ॥ पंचरात्रंसप्तरात्रंसंप्राप्तेकार्त्तिकेव्रती ॥ पक्षव्र तंवाकुर्वीतमासोपोषणमेववा ॥ शाकाहारंपयोघासंफ लाहारमथापिवा ॥ चरेद्यवान्नाहारंवासंप्राप्तेकार्त्तिके व्रती ॥ ब्रह्मचर्यंचरेदूर्ज्जेमहावृतफलाप्तये ॥ पत्रभो जीभवेदूर्ज्जेकांस्यंत्याज्यंप्रयत्नतः ॥ कांस्यस्यानियमे दद्यात्कांस्यंसर्पिःप्रपूरितम् (नारदीये) कार्त्तिकेवर्ज्जये त्कांस्यंकार्त्तिकेशुक्तसंधितम् ॥ शुक्तंपर्युषितम्संधितंल वणंशाकः (पाद्मे) राजिकंमादिकंचैवनदद्यात्कार्त्तिकेव्र ती ॥ द्विदलंतिलतैलंचतथान्यन्मातिदूषितम् (द्विद लंतु) माषमुद्गमसूराश्चचणकाश्चकुलत्थकाः ॥ निष्पा वाराजमाषाश्चआढक्योद्विदलंस्मृतमिति स्कांदोक्तम् ॥ (भारते) कार्त्तिकेवर्ज्जयेन्मांसं कार्त्तिकेवर्ज्जयेन्मधि ति(काशीखण्डे)मधुत्यागेघृतंदद्यात्पायसंचसशर्करम् । मांसाशिनोऽपियेभूपास्त्यजेयुस्तेऽपिकार्त्तिके ॥ नियमे मत्स्यमांसानांप्रदद्यात्कार्त्तिकेव्रती ॥ कूष्मांडानिसमां सानिदर्शस्वर्णयुतान्यपि ॥ कार्त्तिकेमौनभोजीयःसोऽ श्नात्यमृतमेवहि ॥ सुघण्टांसतिलांमौनीसाहिरण्यांप्र दापयेत् ॥ कार्त्तिकेलवणंत्यक्त्वायेनव्रतभृतासता ॥ त्य

क्ताःसर्वेरसास्तेनतत्त्यागीगांप्रदापयेत् ॥ भूशय्यांका
र्त्तिकेकुर्वन्नभवंसंस्पृशेद्व्रती ॥ पर्यंकम्भूषणैर्दद्यात्सतू
लंसोपधानकम् ॥ सर्वंचातुर्मास्यव्रतान्यपिचतुर्ष्वसम्भ
वेकार्त्तिकएवकार्याणि (तथाचतत्रैव) चतुर्ष्वपिचमासेषु
नसामर्थ्यंव्रतेयदि ॥ तदूर्ज्जव्रतिनाभाव्यमथाब्दफल
मिच्छतेति (अथभीष्मपञ्चकम् ॥ कार्त्तिकम्प्रक्रम्यब्रा
ह्मे) एकादश्यान्तुगृह्णीयाद्व्रतम्पञ्चदिनात्मकम् ॥ व्र
तीस्नात्वाविधानेनमध्याह्नेतुतथापुनः ॥ अत्रप्रातर्मध्या
ह्नेचमृद्गोमयाभ्यांस्नात्वादेवर्षिपितॄन्सन्तर्प्यविष्णुपञ्चा
मृतपञ्चगव्यैःसंस्नाप्यकर्पूरकस्तूरी कुंकुमचन्दनैरनुलि
प्यपुष्पैरभ्यर्च्यंकृष्णागुरुणाधूपयित्वा पाञ्चाह्निकमनवर
तदीपम्प्रज्वाल्यहविष्यान्नन्निवेद्य सायंसन्ध्यामुपास्यमू
लमंत्रञ्जपेत् ॥ तत्रपञ्चसुदिनेषुविशेषः ॥ आद्येपद्मैः
पादौप्रपूजयेत् ॥ द्वितीयेविल्वपत्रैर्जानुनी ॥ तृतीयेजा
नुतआनाभितुलसीपत्रैः ॥ चतुर्थेजातीपुष्पैःस्कन्धौ ॥
पञ्चमेमालतीपुष्पैःशिरः (तथा) पञ्चस्वपिदिनेषुपूजो
त्तरम् ॥ सत्यव्रतायशुचयेगाङ्गेयायमहात्मने ॥ भीष्मा
यचददाम्यर्घ्यमाजन्मब्रह्मचारिणे ॥ वसूनामवताराय
शन्तनोरात्मजायच ॥ अर्घ्यन्ददामिभीष्मायसोमवं
शोद्भवायच ॥ वैयाघ्रपदगोत्रायसांकृत्यप्रवरायच ॥
गङ्गापुत्रायभीष्मायप्रदास्येऽहन्तिलोदकम् ॥ अपुत्रा
यददाम्येतत्सलिलंभीष्मवर्मणे ॥ इत्येतैर्मंत्रैर्भीष्मंस
न्तर्प्यगोमयगोमूत्रदुग्ध दधिघृतानिक्रमेणपञ्चसुदिनेषु
पिबेत् ॥ एवम्पञ्चदिनान्युपोष्यषष्ठदिवसेविधिवत्स्ना

त्वापक्वान्नेनपञ्चब्राह्मणान्सम्भोज्यबन्धुभिःसहरात्रौभु ञ्जीत ॥ अत्रचैकादश्यांसुवर्णन्द्वादश्यांवस्त्रंत्रयोदश्या ञ्चैश्चतुर्दश्यांघृतपायसम्पौर्णमास्यां श्वेतकृष्णतिलव स्त्रञ्चदेयम् ॥ मैथुनानृतवादमधुमांसताम्बूलाभ्यङ्गादी निवर्ज्यानि ॥ एतेषुचस्नानादिषुसौरश्चान्द्रोवामास आश्रयणीयः ॥ तुलामकरमेषेषुप्रातःस्नानंविधीयते ॥ हविष्यंब्रह्मचर्यञ्चमहापातकनाशनमितिविष्णुस्मृतेः ॥ आश्विनस्यतुमासस्ययाशुक्लैकादशीभवेत् ॥कार्त्तिकस्य व्रतानीहतस्याञ्चप्रारभेत्सुधीरितिपाद्मोक्तेश्च इतिका र्त्तिककृत्यम् (अथकार्त्तिकोद्यापनविधिः ॥ पाद्मे) नार दउवाच ॥ अथोर्ज्जव्रतिनःसम्यगुद्यापनविधिंनृप ॥ तंश्रृणुष्वमयाऽऽख्यातंसविधानंविशेषतः ॥ ऊर्जशुक्लच तुर्दश्यांकुर्यादुद्यापनंव्रती ॥ व्रतसम्पूर्णतार्थायविष्णुप्री त्यर्थमेवच ॥ तुलस्याउपरिष्टात्तुकुर्य्यान्मण्डपिकांशुभा म् ॥ सुतोरणांचतुर्द्वारांपुष्पचामरशोभिताम् ॥ द्वारेषु द्वारपालांश्चपूजयेन्मृण्मयान्पृथक् ॥ पुण्यंशीलंसुशीलं चजयंविजयमेवच ॥ तुलस्यामूलदेशेतुसर्वतोभद्रमेव च ॥ चतुर्भिर्वर्णकैःसम्यक्शोभाढ्यंसमलंकृतम् ॥ त स्योपरिष्टात्सविधिपञ्चरत्नसमन्वितम् ॥ महाफलेनसं युक्तंकुम्भंतत्रनिधायच ॥ पूजयेत्तत्रदेवेशंशङ्खचक्रग दाधरम् ॥ कौशेयपीतवसनंयुक्तंजलधिकन्यया ॥ इ न्द्रादिलोकपालांश्चमण्डपेपूजयेद्व्रती ॥ द्वादश्यांप्रति बुद्धोऽसौत्रयोदश्यांयतःसुरैः ॥ दृष्टोऽर्चितश्चतुर्दश्यांत स्मात्पूज्यस्तिथाविह ॥ तस्यामुपवसेद्भक्त्याशान्तः

प्रयतमानसः ॥ पूजयेद्देवदेवेशंसौवर्णंगुर्वनुज्ञया ॥ उप
चारैःषोडशभिर्नानाभक्ष्यसमन्वितैः ॥ रात्रौजागरणं
कुर्याद्गीतवाद्यादिमङ्गलैः ॥ मतिंकुर्वन्तियेभक्त्याजाग
रेचक्रपाणिनः॥ जन्मान्तरशतोद्भूतैस्तेमुक्ताःपापसञ्च
यैः ॥ नराणांजागरेविष्णोर्गीतंनृत्यंप्रकुर्वताम् ॥ गोस
हस्रंचददतांफलंसममुदाहृतम् ॥ गीतनृत्यादिकंकुर्वन्
दर्शयन्कौतुकानिच ॥ पुरतोवासुदेवस्यरात्रौवाहरिवा
सरे ॥ पठन्विष्णुचरित्राणियोरञ्जयतिवैष्णवान् ॥ मु
खेनकुरुतेवाद्यंस्वेच्छालापांश्चवर्जयेत् ॥ ततश्चपौर्ण
मास्यांचसपत्नीकान्द्विजोत्तमान् ॥ त्रिंशन्मितांस्तथै
कंवास्वशक्त्यावानिमन्त्रयेत् ॥ वरान्दत्वायतोविष्णु
र्मत्स्यरूप्यभवत्ततः ॥ तस्यांदत्तंहुतंजप्तंतदक्षयमफलं
भवेत् ॥ अतस्तान्भोजयेद्विप्रान्पायसान्नादिनाव्र
ती ॥ अतोदेवाइतिद्वाभ्यांजुहुयात्तिलपायसम् ॥ प्री
त्यर्थंदेवदेवस्यदेवानांचपृथक्पृथक् ॥ दक्षिणांचयथा
शक्तिप्रदद्यात्प्रणमेच्चतान् ॥ देवदेवंसमभ्यर्च्यदेवांश्च
तुलसींतथा ॥ ततोगांकपिलान्तत्रपूजयेद्विधिनाव्रती ॥
गुरुंव्रतोपदेष्टारंवस्त्रालङ्करणादिभिः ॥ सपत्नीकंसमभ्य
र्च्यतांश्चविप्रान्समर्चयेत् ॥ युष्मत्प्रसादाद्देवेशःप्रस
न्नोममसर्वदा ॥ व्रतादस्माच्चयत्पापंसप्तजन्मकृतंमया ॥
तत्सर्वंनाशमायातुस्थिरामेचास्तुसंततिः ॥ मनोरथा
श्चसफलाःसन्तुनित्यंतवार्चनात् ॥ देहांतेवैष्णवंस्थानं
प्राप्नुयामातिदुर्लभम् ॥ इत्याक्षमाप्यतान्विप्रान्प्रसा
द्यचाविसर्ज्जनात् ॥ कार्त्तिकेवाथतपसिविधिरेवंविधः

स्मृतः (नारदः) एवंयःकुरुतेसम्यक्कार्त्तिकस्यव्रतन्न
रः ॥ विपाप्मासतुनिर्मुक्तोविष्णुसान्निध्यगोभवेत् ॥
सर्वव्रतैःसर्वतीर्थैःकार्त्तिकव्रतकारिणः ॥ देहस्थितानि
पापानिविलयंयान्तितद्भयात् ॥ कयास्यामोवयंत्वेवंय
दूर्ज्जेव्रतकृन्नरः (नारदउवाच) यत्पूर्ज्जव्रतनियमान्
शृणोतिभक्त्यायोवैतत्कथयतिवैष्णवायनित्यम् ॥ तेस
म्यग्व्रतकरणात्फलंभवेद्यत्तत्सर्वंकलुषविनाशनंलभते।
(इतिकार्त्तिकोद्यापनविधिः॥ अथमार्गशीर्षकृत्यम्) म
हाभारते ॥ मार्गशीर्षन्तुयोमासमेकभक्तेनसंक्षयेत्।
भोजयेत्तुद्विजाञ्छक्त्यासमुच्येद्व्याधिकिल्बिषैः ॥ कृ
षिभागीबहुधनोबहुधान्यश्चजायते (वामनपुराणे) ख
रोष्ट्राश्वनरागावःशकटानिअजाविकम् ॥ दातव्यंकेश
वप्रीत्यैमासेमार्गशिरेनरैः (इतिमार्गशीर्षकृत्यम् ॥ अ
थपौषकृत्यम्) महाभारते॥ पौषमासन्तुकौन्तेयएकभ
क्तेनयःक्षिपेत् ॥ शुभगोदर्शनीयश्चयशोभागीचजाय
ते(इतिपौषकृत्यम्॥अथमाघकृत्यम्)विष्णुस्मृतौ॥ तुला
मकरमेषेषुप्रातःस्नायीभवेन्नरः॥ हविष्यंब्रह्मचर्यंचमहा
पातकनाशनमिति (प्रभासखण्डे) माघेमासिचयःस्ना
यान्नैरंतर्येणभारत ॥ पौण्डरीकफलंतस्यदिवसेदिवसे
भवेत् (ब्रह्मपुराणे) एकादश्यांशुक्लपक्षेपौषमासेसमारभे
त्॥द्वादश्यांपूर्णिमायांवाशुक्लपक्षेसमापनम्(पद्मपुराणे)
पौषस्यैकादशींशुक्लामारभ्यस्थण्डिलेशयः ॥ मासमात्रं
निराहारस्त्रिकालंस्नानमाचरेत् ॥ त्रिकालमर्चयेद्विष्णुं
त्यक्त्वाभोगाञ्जितेन्द्रियः ॥ माघस्यैकादशीशुक्लायाव

द्विद्याधरोत्तम ॥ इदनूत्रिकालस्नानन्निराहारस्यैवसाह
चर्य्यात् (स्नानकालश्चपद्मपुराणे) माघमासेरटन्त्या
पःकिंचिदभ्युदितेरवाविति॥ भविष्योत्तरे ॥ योमाघमा
स्युषसिसूर्य्यकराभितप्तेस्नानंसमाचरतिचारुनदीप्रवा
हे,इति (ब्राह्मये) अरुणोदयेतुसम्प्राप्तेस्नानकालोविच
क्षणः ॥ माधवांघ्रियुगंध्यायन्यःस्नात्युषसिपूजयेदि
ति ॥ एतानिशक्त्यपेक्षयाव्यवस्थितानि ॥ तत्रसङ्कल्प
मन्त्रमाहविष्णुः ॥ तत्रचोत्थायनियमंगृह्णीयाद्विधिपूर्व
कम् ॥ माघमासमिमम्पूर्णस्नास्येऽहंदेवमाधव ॥ तीर्थ
स्यास्यजलेनित्यमितिसङ्कल्प्यचेतसेति (स्नानमन्त्रः)
पाद्मे ॥ दुःखदारिद्यनाशायश्रीविष्णोस्तोषणायच ॥
प्रातःस्नानंकरोम्यद्यमाघेपापविनाशनम् ॥ मकरस्थेर
वौमाघेगोविंदाच्युतमाधव ॥ स्नानेनानेनमेदेवयथोक्त
फलदोभव ॥ इमंमन्त्रंसमुच्चार्यस्नायान्मौनसमन्वित
इति ॥ सवित्रेप्रसवित्रेचपरन्धामजलेमम ॥ त्वत्तेजसा
परिभ्रष्टंपापंयातुसहस्रधेति मन्त्रेणसूर्यायार्घ्यदानमुक्त
म्पृथ्वीचन्द्रोदये ॥ मासपर्यन्तमसम्भवेत्र्यहङ्कर्त्तव्य
म् ॥ अस्मिन्योगेत्वशक्तस्तुस्नायादपिदिनत्रयम् ॥
प्रयागेमाघमासेतुत्र्यहंस्नातस्ययत्फलम् ॥ नाश्वमेध
सहस्रेणतत्फलंलभतेभुवीति पाद्मात् ॥ प्रयागसम्भवे
काशीखण्डे॥काश्युद्भवेप्रयागेयेतपसिस्नन्तिमानवाः॥
दशाश्वमेधजनितम्फलन्तेषाम्भवेद्ध्रुवमिति (भवि
ष्योत्तरे) अपावृत्तशरीरस्तुयःकष्टंस्नानमाचरेत्॥पदेपदे
ऽश्वमेधस्यफलम्प्राप्नोतिमानवः (नारदीये) नवाहिंसेव

येत्स्नातोह्यस्नातोऽपिवराननने ॥ होमार्थंसेवयेद्वह्निंशी तार्थेनकदाचन ॥ अहन्यहनिदातव्यास्तिलाश्शर्करया न्विताः ॥ त्रिभागस्तुतिलानांहिचतुर्थश्शर्करान्वितः॥ (तथा) तिलस्नायीतिलोद्वर्त्तीतिलहोमीतिलोदकी ॥ तिलभुक्तिलदाताचषट्तिलाःपापनाशनाः ॥ तैलमा मलकाश्चैवतीर्थेदेयास्तुनित्यशः ॥ तथाप्रज्वालयेद्वह्निं सेवनार्थन्द्विजन्मनाम् (पाद्मे) दातव्योदीपकोऽख ण्डोदेवमुद्दिश्यमाधवम् (विष्णुः) माघेमास्यग्निम्प्र त्यहन्तिलैर्हुत्वासघृतशर्करम्ब्राह्मणान्भोजयित्वादीप्ता ग्निर्भवति (अथमाघव्रतोद्यापनमाह) चन्द्रप्रका शेविष्णुः॥ एवंस्नानावसानेतुभोज्यन्देयमवारितम्॥ भोजयेद्द्विजदाम्पत्यम्भूषयेद्वस्त्रभूषणैः ॥ कम्बलाजि नरत्नानिवासांसिविविधानिच ॥ चोलकानिचदेया निप्रच्छादनपटांस्तथा ॥ उपानहौतथागुप्तमोचकौ पापमोचकौ ॥ अनेनविधिनादद्यान्माधवःप्रीयता मिति (अत्रसमापनमन्त्रः) सवित्रेप्रसवित्रेचपर न्धामजलेमम॥ त्वत्तेजसापरिभ्रष्टम्पापंयातुसहस्रधा॥ दिवाकरजगन्नाथप्रभाकरनमोऽस्तुते ॥ परिपूर्णङ्करि ष्येऽहमाघस्नानन्तवाज्ञया ॥ अहन्यहनिदातव्यास्ति लाश्शर्करयान्विताः ॥ माघावसानेशुभगेषट्त्रिंशद्भो जनन्तथा॥ सूर्योमेप्रीयतान्देवोविष्णुमूर्त्तिर्निरञ्जनः॥ दम्पत्योर्वाससीसूक्ष्मेसप्तधान्यसमन्विते ॥ त्रिंशत्तुमो दकादेयाश्शर्करास्तिलसंयुताः ॥ भागत्रयन्तिलाना न्तुचतुर्थश्शर्करांशकः ॥ अनभ्यङ्गीवरारोहेसर्वंमास

न्नयेदघम् (विशेषोद्यापनन्तु) कार्त्तिकेवाथतपसिवि
धिरेवंविधःस्मृतइतिवचनात्पूर्वोक्तएवज्ञेयः (इतिमा
घकृत्यम् ॥ अथफाल्गुनकृत्यम्) स्कांदे ॥ एकभक्त
न्तुकुर्वाणःफाल्गुनेमासिनित्यशः ॥ स्त्रीषुसौभाग्यमा
प्नोतिस्त्रियश्चपरमाप्रियाः (वामने) फाल्गुनेव्रीहयोगा
वोवस्त्रंकृष्णाजिनान्वितम् ॥ गोविन्दप्रीणनार्थायदा
तव्यम्पुरुषर्षभ (तथा) प्रातःस्नायीभवेन्नित्यन्द्वौमासौ
माघफाल्गुनाविति (इतिफाल्गुनकृत्यम् ॥ अथमल
मासः) स्वरूपंमाधवीयेब्रह्मसिद्धान्ते ॥ चान्द्रोमासो
ह्यसंक्रान्तोमलमासःप्रकीर्त्तितइति ॥ सद्विविधः ॥
अधिमासःक्षयमासश्चेति (तदुक्तंमदनरत्नेकाठकगृह्ये)
यस्मिन्मासेनसंक्रान्तिःसंक्रान्तिद्वयमेववा ॥ मलमा
सःसविज्ञेयोमासःस्यात्तुत्रयोदशइति तस्यकालनिय
मोऽपिब्रह्मसिद्धान्ते) द्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडश
कैस्तथा ॥ घटिकानाञ्चतुष्केनपतत्यधिकमासकइति॥
द्वितीयस्वरूपमपिसिद्धान्तशिरोमणौ ॥ असंक्रान्ति
मासोऽधिमासःस्फुटः स्याद्द्विसंक्रान्तिमासः क्षयाख्यः
कदाचित् ॥ क्षयःकार्त्तिकादित्रयेनान्यतःस्यात्तदावर्ष
मध्येऽधिमासद्वयञ्च ॥ अपिद्वयंक्षयात्पूर्वमेकः ॥ प
श्चादनन्तरइत्यर्थः ॥ तस्यागमनकालोऽपितत्रैव ॥
अतोऽब्ध्यद्रिनन्दैर्मिते ९७४ शाककालेतिथीशै १११५
र्भविष्यत्यथाङ्गाक्षसूर्य्यैः१२५६ ॥ गजाद्र्यग्निभूमि
१३७८ स्तथाप्रायशोऽयंकुवदेन्दुवर्षैः१४१ क्वचिद्गोकुभि
१९ श्चेति ॥ अस्यार्थः ॥ अब्धयश्चत्वारः,अद्रयःसप्त,

नन्दानव,एतत्संख्यात्रयम्, "अङ्कानांवामतोगति"र्वि लोमेनबोध्यम् ॥ एवंमेलनेचतुःसप्तत्याधिकनवशतसंख्यासम्पद्यते॥ एभिर्वर्षैःपरिमितेकालेकश्चितुच्चयमासःपूर्वंजातइत्यर्थः॥एवमग्रेऽपिप्रातिलोमेनसंख्याबोद्धव्या॥ तिथयःपञ्चदश,ईशाएकादश,पञ्चदशाधिकशतयुक्तसहस्रसंख्याकैर्मितेयातेकश्चित्क्षयमासोपेतः संवत्सरोभविष्यतीत्यर्थः॥ अङ्गानिषट्,अक्षाणिपञ्च,सूर्याद्वादश ॥ षट्पञ्चाशदधिकशतद्वयोपेतसहस्रसंख्याकैर्वत्सरैर्मितेयातेभविष्यतीत्यर्थः॥ गजाअष्टौ,अद्रयःसप्त,अग्नयस्त्रयोभूरेकः॥ अष्टसप्तत्यधिकशतत्रयोपेतसहस्रसंख्याकैर्यातेभविष्यतीत्यर्थः॥ कुरेको,वेदाश्चत्वार,इन्दुरेकः, एकचत्वारिंशदधिकशतसंख्याकैर्वर्षैस्तथागावोनव,कुरेकः। एकोनविंशतिसंख्याकैर्वर्षैरयंजायतइत्यर्थः (इतिमलमासस्वरूपम्) अथात्रवर्ज्यावर्ज्यमुच्यते॥ तत्रमाधवीयेपैठीनसिः॥श्रौतस्मार्त्तक्रियाःसर्वाद्वादशेमासिकीर्त्तिताः॥ त्रयोदशेतुसर्वास्तानिष्फलाःपरिकीर्त्तिताः (जाबालिरपि) नित्यनैमित्तिकेकुर्याच्छ्राद्धंकुर्य्यान्मलिम्लुचे॥तिथिनक्षत्रवारोक्तंकाम्यन्नैवकदाचन॥ कानिचिन्नित्यानिमलिम्लुचेवर्ज्ज्यानीतिकाठकगृह्ये॥पष्ठीज्याग्रयणाधानचातुर्मास्यादिकान्यपि॥महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत्॥स्पष्टमासविशेषाख्यविहितंवर्ज्जयेन्मलेइतिषष्ठीष्टिः॥ काठकाद्धौप्रसिद्धा (मदनरत्नेस्मृतिसंग्रहे) जातकर्मचपुंसातिःसीमंतोन्नयनव्रतम्॥ मलिम्लुचेपिकुर्वीतनिमित्तंयदिजायत

इति (माधवीयेभृगुः) वृद्धिश्राद्धंतथासोममग्न्याधेयं महालयम् ॥ राजाभिषेकंकाम्यंचनकुर्याद्भानुलंघितेइ ति (वृद्धमनुरपि) अग्न्याधेयंप्रतिष्ठाश्चयज्ञदानव्रता निच॥ वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ माङ्गल्य मभिषेकंचमलमासेविवर्ज्जयेत् (वृषोत्सर्गःकाम्यः)ज्यो तिःशास्त्रे ॥ तत्रदत्तमदत्तश्चहुतंनहुतमेववा ॥ सुज ह्मप्यजस्रंस्यान्नोपवासःकृतोभवेत् ॥ नयात्रानविवा हन्तुनचवास्तुनिवेशनम् ॥ नप्रतिष्ठाचदेवानांप्रासाद ग्रामभूरुहामिति (स्मृत्यन्तरेपि) वापीकूपतडागादि प्रतिष्ठायज्ञकर्मच ॥ नकुर्यान्मलमासेचमहादानव्रता निच (प्रजापतिरपि) उपाकर्मचहव्यश्चकव्यंपर्वोत्स वन्तथा ॥ उत्तरेनियतंकुर्यात्पूर्वेतन्निष्फलम्भवेत् (अ न्यत्रापि) अवषट्कारहैमन्तःसर्पाणांबलिरष्टकाः ॥ ई शानस्यबलिर्विष्णोःशयनम्परिवर्त्तनम् ॥ प्रायश्चित्तन्तु सर्वस्यमलमासेविवर्ज्जयेत् (अवषट्कारहोमः) अग्नि होत्रोपासनवैश्वदेवादयः ॥ पर्वदर्शपूर्णमास्यौस्थाली पाकौच ॥ अग्रयणमग्रयणेष्टिः (साचतुर्भिर्त्तेइतिदी पिकायाम्) विचारणकारः (बृहस्पतिः) बालेवायदि वावृद्धेशुक्रेवास्तङ्गतेगुरौ ॥ मलमासइवैतानिवर्ज्जयेद्दे वदर्शनमिति ॥ आधानंयज्ञकर्मादिप्रायश्चित्तव्रतानि च ॥ नकुर्यान्मलमासेपिशुक्रगुर्वोरुपप्लवे ॥ अस्तङ्गते गुरौशुक्रेवृद्धेबालेमलिम्लुचे ॥ वृतारम्भापवर्गंचनकु र्यान्मौञ्जिबन्धनम् ॥ निःक्रमंजातकर्माणिकाम्यंवृषवि सर्ज्जनमिति ॥ जातकर्माणिजातेष्टिः ॥ बहुवचनंछा

न्दसम् (अस्तउक्तोब्रह्मसिद्धान्ते) रविणासक्तिरन्येषांग्र
हाणामस्तउच्यते ॥ ततोर्वाग्वार्द्धकंमौढ्यादूर्द्ध्वंबाल्यं
प्रकीर्त्तितमिति ॥ वार्द्धकबाल्ययोर्मानमपि (तत्रैव)
पक्षंप्राग्दिशिवृद्धत्वंपश्चात्पञ्चदिनंकवेः ॥ शैशवंप्रा
क्पञ्चाहंपश्चाद्दशदिनंस्मृतमिति ॥ कविःशुक्रः (अत्र
विशेषः) पक्षंवृद्धोमहास्तेतुबालश्चात्रदशाह्निकः ॥
पादास्तेतुदशाहानिवृद्धबालोदिनत्रयम् ॥ महास्तपा
दास्तलक्षणन्तु ॥ द्वात्रिंशद्दिवसाश्चास्तेजीवस्यभार्ग
वस्यतु ॥ द्वासप्ततिर्महात्यस्तेपादास्तेद्वादशक्रमादिति
(अत्रैव प्राक्पश्चादुदितःशुक्रःपञ्चसप्तदिनंशिशुः ॥
विपरीतन्तुवृद्धत्वंतद्वद्देवगुरोरपीति ॥ इत्यादिनान्यू
नाधिकभावःश्रूयते (एतद्व्यवस्थामाहगर्गः) शुक्रोगु
रुःप्रागपराक्चबालोविन्ध्येदशावन्तिषुसप्तरात्रम् ॥ व
ङ्गेषुहूणेषुचषट्कपञ्चशेषेचदेशेत्रिदिनंवदन्ति ॥ वृद्ध
त्वमप्येतत्प्रमाणंज्ञेयम् ॥ एवंवक्रातिचारसिंहराशिग
तोगुरुरस्तंगतइतिशुभकर्मसुवर्ज्यः (तदुक्तंलल्लेन) नी
चस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवा संन्या
सोदेवयात्राव्रतनियमविधिःकर्णवेधोपिदीक्षा ॥ मौ
ञ्जीबन्धोथचूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याःस
द्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशिस्थितेचेति ॥ नीच
स्थोमकरस्थः विशेषमाहमाण्डव्यः) श्रुतिवेधजातका
न्नप्राशनचूडादिकंसर्वंरविभवनस्थे जीवेकार्यंवर्ज्योवि
वाहस्त्विति (तथा) रविक्षेत्रगतेजीवेजीवक्षेत्रङ्गतेर
वौ॥वर्ज्जयेत्सर्वकर्माणिव्रतस्वस्त्ययनानिच(तथा)गुर्वा

दित्ये गुरौसिंहेशुक्रेचास्तमुपागते ॥ त्यजेत्स्नानंमहादा नंव्रतंदेवविलोकनम् (लल्लः) गुरुक्षेत्रगतेभानुर्भानुक्षेत्रगतेगुरुः ॥ गुर्वादित्यःसविज्ञेयःसर्वकर्मसुगर्हितः ॥ (शौनकः) एकराशिगतौशुक्रजीवौस्यातांयदापुनः ॥ व्रतबंधविवाहादिशुभंकर्माखिलन्त्यजेत् (राजमार्त्तण्डे) यात्राचूडाविवाहश्रुतिविवरविधिंशङ्खसद्मप्रवेशं प्रासादोद्यानहर्म्यसुरनरभवनारम्भविद्याविधानम् ॥ मौंजीबन्धप्रतिष्ठांमणिकनकरदाधारणंकुर्वतेये मृत्युःसिंहास्थितेज्येगुरुदिनकरयोरेकराशिस्थयोश्च (तथा) गुर्वादित्येगुरौसिंहेनष्टेशुक्रेमलिम्लुचे ॥ याम्यायनेहरौसुप्तेसर्वकर्माणिवर्ज्जयेत् (सिंहस्थेगुरौविशेषमाहशतानन्दः) माघ्यांयदिमघानास्तिसिंहेगुरुरकारणम् ॥ अन्यत्रापि ॥ मघाऋक्षंपरित्यज्ययदासिंहेगुरुर्भवेत् ॥ तदाचेत्कन्यकाऊढासुभगासुप्रियाभवेत् ॥ (तथा)माघीचमघयायुक्तामघायांचगुरुर्भवेत् ॥ महामाघस्तदाप्रोक्तोव्रतोद्वाहौचवर्जयेत् (वृद्धगार्ग्यः) मीनेधनुषिसिंहेचास्थितेसप्ततुरंगमे ॥ क्षौरमत्रनकुर्वीतविवाहंगृहकर्मच (तथा) वापीकूपतडागयागगमनक्षौरप्रतिष्ठाव्रतं विद्यामन्दिरकर्णवेधनमहादानंवनंसेवनम् ॥ तीर्थस्नानविवाहदेवभवनंमन्त्रादिदेवेक्षणं दूरादेवजिजीविषुःपरिहरेदस्तंगतेभार्गवइति (लल्लोत्रपुनर्विशेषमाह) उपप्लवेशीतलभानुभान्वोरर्द्धोदयेवाकपिलाख्यवाप्याम् ॥ सुरासुरेज्यास्तमयेचतीर्थेयात्राविधिःसंक्रमणेपिशस्तः ॥ गुरुशुक्रास्तमयादिनिषिद्धकालेग्रहणा

दोनदोषइत्यर्थः ॥ सएव ॥ अतीचारगतौजीवस्तंरा शिंनैतिचेत्पुनः ॥ लुप्तःसंवत्सरोज्ञेयःसर्वकर्मबहिःकृ तः ॥ अस्यापवादः ॥ वृषेमेषेझषेकुम्भेयद्यतीचारगो गुरुः ॥ नतत्रकाललोपःस्यादित्याहगालवोमुनिरिति ॥ (गयाविषयेवायुपुराणेविशेषउक्तः) गंगायांसर्वकालेषु पिण्डंदद्याद्विचक्षणः ॥ अधिमासेजन्मदिनेह्यस्तेचगु रुशुक्रयोः ॥ नत्यक्तव्यंगयाश्राद्धंसिंहस्थेचबृहस्पतौ ॥ (तथा) गोदावर्य्यांगयायांचश्रीशैलेग्रहणद्वये ॥ सुरा सुरगुरूणांचमौढ्यदोषोनविद्यते (तथा) शान्तिकर्मप्र कुर्वीतरोगेनैमित्तिकेतथा ॥ गुरुभार्गवमौढ्यादिदोष स्तत्रनविद्यतइति (काश्यामपिस्कान्दे) सदाकृतयुगे चात्रमहापर्वसदात्रवै ॥ नग्रहास्तोदयकृतोदोषोविश्व तरालये ॥ सदासौम्यायनन्तत्रसदातत्रमहोदयः ॥ एतानिकाशीस्तुतिमात्रपराणीतिवृद्धाः (मात्स्ये) दर्शे प्यहरहःश्राद्धंदानंचप्रतिवासरम् ॥ गोभूतिलहिरण्या नांमासेपिस्यान्मलिम्लुचे(मदनरत्नेयमः)आब्दिकंप्रथ मंयत्स्यात्तत्कुर्वीतमलिम्लुचे ॥ चतुर्दशेतुसम्प्राप्तेकुर्वी तपुनराब्दिकम् ॥ पुनराब्दिकंद्वितीयाद्याब्दिकम् ॥ (सत्यव्रतोपि) वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि ॥ मलमासेनकर्त्तव्यंव्याघ्रस्यवचनंयथा ॥ यानिमासद्वये पिकुर्वीतेत्यादीनिवचनानि तानिमासिकविषयाणीति मदनरत्ने ॥ मलमासमृतानांतुयदिकदाचित्सएवमल मासउपागतस्तदातत्रैवप्रत्याब्दिकंकार्यंनतुशुद्धमासेत दाहमाधवीयेभृगुः ॥ मलमासेमृतानांतुयच्छ्राद्धंप्रति

वत्सरम् ॥ मलमासेतुकर्त्तव्यंनान्येषांतुकदाचनेति ॥
(यत्तुहेमाद्रौव्यासः) मलमासमृतानांतुसौरंमासंसमा
श्रयेत ॥ सएवदिवसस्तस्यश्राद्धपिण्डोदकादिष्विति
तदप्येतत्परमेव ॥ क्षयमासेतुतत्रैवप्रत्याब्दिकंकार्य्य
म् (तदाहमदनरत्नेसत्यव्रतः) एकएवयदामासःसंक्रा
न्तिद्वयसंयुतः ॥ मासद्वयगतंश्राद्धंमलमासेपिशस्यतेइ
ति (तत्र) यस्यास्तिथेःपूर्वार्द्धेमृतःसैवतिथिःक्षयात्पू
र्वमासस्थिताग्राह्या ॥ उत्तरार्द्धेचतदाउत्तरमासस्थिता
ग्राह्या (तथाचोक्तंदीपिकायाम्) तिथ्यर्द्धेप्रथमेपूर्वोद्वि
तीयेर्द्धेतदुत्तरः ॥ मासावितिबुधैश्चिन्त्यौक्षयमासस्य
मध्यगाविति (अथात्रदानमुक्तंब्रह्महेमाद्रौपाद्मे) अधि
मासेतुसम्प्राप्तेगुडसर्पिर्युतानिच ॥ त्रयस्त्रिंशदपूपान्नं
कांस्यपात्रेनिधायच ॥ सघृतंसहिरण्यञ्चब्राह्मणायनि
वेदयेत् ॥ विष्णुरूपीसहस्रांशुःसर्व्वपापप्रणाशनः ॥
अपूपान्नप्रदानेनममपापंव्यपोहतु ॥ नारायणजगद्बीज
भास्करप्रतिरूपक ॥ व्रतेनानेनपुत्रांश्चसम्पदंचाभिव
र्द्धय ॥ यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनम् ॥ शङ्खः
करतलेयस्यसमेविष्णुःप्रसीदतु ॥ कलाकाष्ठादिरूपेण
निमेषघटिकादिना॥ योवञ्चयन्तिभूतानितस्मैकालात्म
नेनमः॥ कुरुक्षेत्रमयोदेशःकालःपर्वद्विजोहरिः ॥ पृथ्वी
सममिदंदानंगृहाणपुरुषोत्तम ॥ मलानांचविशुद्ध्यर्थंपा
पप्रशमनायच ॥ पुत्रपौत्राभिवृद्ध्यर्थंतवदास्यामिभा
स्कर ॥ मन्त्रेणानेनयोदद्यात्त्रयस्त्रिंशदपूपकान्॥ प्रा
प्नोतिविपुलांलक्ष्मींपुत्रपौत्रादिसम्पदः (इतिमलमास

निर्णयः॥ अथर्त्तुनिर्णयः) सचषड्विधोमासद्वयात्मक श्चांद्रःसौरश्च॥ वसन्तोग्रीष्मोवर्षाशरद्धेमन्तःशिशि रइति॥ षड्वाऋतवइतिश्रुतेः॥ यत्तुश्रुतौद्वादशमा साःपञ्चर्त्तवइत्युक्तंतत्रपञ्चप्रयाजानुरोधेनहेमन्ताशिशिर योरेकीकरणंविवक्षितम्॥ तेचवसन्तोपक्रमाः॥ मुखं वाएतदृतूनांयद्वसन्तइतिश्रुतेः॥ मासद्वयात्मकत्वंचा ग्निचयनेष्टकोपधानब्राह्मणे॥ द्वंद्वमुपदधातितस्माद्द्वं द्वमृतवइति॥ वसंतावृतुक्रमेणचैत्रमासादिद्वंद्वमिति॥ मधुश्चमाधवश्चवासंतिकावृतूइतिश्रुतेः॥ ननुकदा चिदधिमासेसतिमासत्रयात्मकः कश्चिदृतुर्भवतितत्क थंमासद्वयात्मकत्वमितिचेन्न॥अधिमासस्यषाष्टिदिना त्मकमासावयवत्वस्यप्रतिपादितत्वात्(अयञ्चान्द्रःसौरो प्युक्तोरत्नमालायाम्) मृगादिराशिद्वयभानुभोगात्षट् चर्त्तवःस्युःशिशिरोवसंतः॥ग्रीष्मश्चवर्षाचशरच्चतद्वद्धे मंतनामाकथितोत्रषष्ठइति (इत्यृतुनिर्णयः॥ अथाय नम्) तत्तुऋतुत्रयात्मकंसौरमेव (तदुक्तंदीपिकायाम्) सौरर्त्तुत्रितयंप्रदिष्टमयनमिति॥ ऋतुत्रयश्चायनंस्या दितिमदनरत्नेविष्णुधर्मोक्तेश्च॥तच्चद्विविधम्॥ उत्तरंद क्षिणंच॥ शिशिराद्युत्तरंवर्षादिदक्षिणम्(तदुक्तंरत्नमा लायाम्)शिशिरपूर्वमृतुत्रयमुत्तरंह्ययनमाहुरहश्चतदा मरम्॥ भवतिदाक्षिणमन्यदृतुत्रयंनिगदितारजनीमरु तांचसेति (श्रुतिरपि) तस्मादादित्यःषण्मासान्दक्षि णेनैतिषडुत्तरेणेति॥ अनयोरुपयोगमाधवीयेकाण्वः॥उ दगयनआपूर्यमाणपक्षस्यपुण्याहे द्वादशाहमुपवसेद्व्रती

भूत्वेत्यादि (सत्यव्रतोपि) देवतारामवाप्यादिप्रतिष्ठोद
ङ्मुखेरवौ ॥ दक्षिणाशामुखेकुर्वन्नतत्फलमवाप्नुयादि
ति (वैखानससंहितायाम्) मातृभैरववाराहनरसिंहत्रि
विक्रमाः ॥ महिषासुरहंत्रीचस्थाप्यावैदक्षिणायनइति
(मदनरत्नेज्योतिःशास्त्रे) गृहप्रवेशत्रिदशप्रतिष्ठावि
वाहचौलव्रतबंधपूर्वम् ॥ सौम्यायनेकर्म्मशुभंप्रदिष्टंयद्ग
र्हितंतत्खलुदक्षिणेचेति (इत्ययननिर्णयः॥ अथसंवत्स
रः) सचमासत्रैविध्यात्त्रिविधइतिहेमाद्रिः (अतएव
ब्रह्मसिद्धांते) चान्द्रसावनसौराणांमासानांतुप्रभेद
तः ॥ चान्द्रसावनसौराःस्युस्त्रयःसंवत्सराइति ॥ तत्र
चान्द्रसंवत्सरश्चैत्रशुक्लप्रतिपदातिःफाल्गुणदर्शांतः ॥
सौरस्तुरवेर्द्वादशराशिभोगेन ॥ सावनःषष्ठ्युत्तरशतत्र
याहोरात्रात्मकः (आद्यउक्तोब्रह्मपुराणे) चैत्रेमासिजग
द्ब्रह्मासमर्जप्रथमेहनि ॥ शुक्लपक्षेसमग्रन्तुतदासूर्यो
दयेसतीति (आर्ष्टीषेणोपि) स्मरेत्सर्व्वत्रकर्म्मादौचांद्रं
संवत्सरंसदा ॥ नान्यंयस्माद्वत्सरादौप्रवृत्तिस्तस्यकी
र्त्तिते ॥ इमेचारम्भसमाप्तीकर्म्मांगस्मरणएवोपयुज्य
ते (वस्तुतस्तु) मासान्तरर्थतिथ्यन्तरमारभ्यवर्षान्तर
स्थतत्पूर्वभावितिथ्यंतोपिवत्सरचांद्रएव ॥ चन्द्रकाल
रूपतिथिघटीत्वात् (अन्यानपिभेदानाहनारदः) प्रभ
वोविभवःशुक्लःप्रमोदोथप्रजापतिः ॥ अङ्गिराःश्रीमुखो
भावोयुवाधातातथैवच ॥ ईश्वरोवहुधान्यश्चप्रमाथी
विक्रमोवृषः ॥ चित्रभानुःसुभानुश्चतारणःपार्थिवोव्य
यः ॥ सर्वजित्सर्व्वधारीचाविरोधीविकृतःखरः ॥ नन्द

नोविजयश्चैवजयोमन्मथदुर्मुखौ ॥ हेमलम्बोविल
म्बोथविकारीशर्वरीप्लवः ॥ शुभकृच्छोभनःक्रोधीवि
श्वावसुपराभवौ ॥ प्लवङ्गःकीलकःसौम्यःसाधारणोवि
रोधकृत् ॥ परिधावीप्रमाथीचआनन्दोराक्षसोनलः ॥
पिंगलःकालयुक्तश्चसिद्धार्थीरौद्रदुर्मती ॥ दुंदुभीरुधि
रोद्गारीरक्ताक्षीक्रोधनःक्षयइति ॥ एताःसंज्ञायद्यपि
ज्योतिःशास्त्रेबार्हस्पत्यस्यैवोक्तास्तथापि ॥ चांद्राणांप्र
भवादीनामिति चांद्रस्यप्रभवादिनामभिर्व्यवहाराच्छि
ष्टाचाराश्चमासपक्षादिवत्प्रभवादिश्चान्द्रःसंवत्सरोपि
सङ्कल्पादौसङ्कीर्त्यः ॥ ज्योतिःशास्त्रेतुबार्हस्पत्यनाक्षत्रा
वपिवत्सरावुक्तौ ॥ तत्रबृहस्पतेर्मध्यममानेनैकराशिभो
गेनबार्हस्पत्यः ॥ सप्तविंशतिनक्षत्रपरिवृत्त्याएकोमास
स्तैर्द्वादशभिर्वत्सरः (नाक्षत्रः) अनयोस्तुधर्मशास्त्रेनको
प्युपयोगः(इतिसंवत्सरनिर्णयः॥अथजन्मतिथिकृत्यम्)
जन्ममासेनकर्त्तव्यंचांद्रमासीयत्वेनसावकाशत्वात् ॥
(ब्रह्मपुराणे) सर्वैश्चजन्मदिवसेस्नातैर्मङ्गलपाणिभिः॥
गुरुदेवाग्निविप्राश्चपूजनीयाःप्रयत्नतः ॥ स्वनक्षत्रञ्च
पितरस्तथादेवःप्रजापतिः॥ प्रतिसंवत्सरञ्चैवकर्त्तव्यश्च
महोत्सवः ॥ स्नातैस्तिलस्नातैः ॥ तथाचतिथिमधिकृ
त्य ॥ तिलस्नायीतिलोद्वर्त्तीतिलहोमीतिलप्रदः ॥ तिल
भुक्तिलवापीचषट्तिलानावसीदति ॥ मङ्गलपाणिभि
रभिप्रेतार्थसिद्धिहेतुतयागोरोचनादिकंमंगलं ॥ तत्पा
णिभिरित्यर्थः (तथाचकृत्यचिन्तामणौ) गुडदुग्धति
लानयाज्जन्मग्रन्थेश्चबन्धनम् ॥ गुग्गुलुंनिम्बसिद्धा

र्थंपूर्व्वंगोरोचनायुतम् ॥ सम्पूज्यमानविप्रेभ्योमहर्षिः प्रार्थयेदिदम् ॥ चिरञ्जीवीयथात्वंभोभविष्यामितथामुने ॥ रूपवान्वित्तमांश्चैवश्रियायुक्तश्चसर्वदा ॥ मार्कण्डेयमहाभागसप्तकल्पान्तजीवन॥ आयुरिष्टार्थसिद्ध्यर्थमस्माकंवरदोभव ॥ स्वनक्षत्रंजन्मकालीनम् ॥ नामकरणेतथादर्शनात् (तथाचश्रीपतिरत्नमालायाम्) नववस्त्रधरोभूत्वापूजयेच्चचिरायुषम्॥ द्विभुजंजटिलंसौम्यंसुवृद्धंचिरजीविनम्॥ मार्कण्डेयंनरोभक्त्यापूजयेत्प्रयतस्तथा॥ ततोदीर्घायुषंव्यासंरामंद्रौणिंकृपंबलिम्॥ प्रह्लादञ्चहनूमन्तंविभीषणमथार्चयेत्॥ षष्ठीचदधिभक्तेनवर्षेवर्षेपुनःपुनः॥ रामःपरशुरामः॥द्रौणिरश्वत्थामा॥ ततस्तिलहोमःपूजितदेवतानाममंत्रैःस्वाहान्तैःकार्यः॥ (देवीपुराणे)होमेग्रहादिपूजायांशतमष्टोत्तरंभवेत्॥ अष्टाविंशतिरष्टौवायथाशक्तिविधीयते॥ ततोगुडदुग्धतिलपानम् (तत्रमन्त्रः) सगुडंतिलसंमिश्रंजलपर्द्धमितंपयः॥ मार्कण्डेयवरंलब्ध्वापिबाम्यायुष्यहेतवइति(स्कांदे) खण्डनंनखकेशानांमैथुनाध्वानएवच॥ आमिषंकलहंहिंसांवर्षवृद्धौविवर्जयेत्॥ कलहमित्यत्रसंगरमितिक्वचित्पाठः (वृद्धमनुः) मृतेजन्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा॥अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणा॥ जन्मनिपुत्रजन्मनिज्योतिषे ॥ स्नात्वाजन्मदिनेस्त्रियंपरिहरन्प्राप्नोत्यभीष्टंप्रियं मात्स्यान्मोचयतोद्विजायददतोप्यर्थांश्चिरंवर्द्धते ॥ शक्तून्खादतियश्चतस्यारिपवोनाशंप्रयांतिध्रुवंभुंक्तेयश्चनिरामिषंसहिभवेज्जन्मा

न्तरेपंडितः (जन्मतिथेःखंडत्वेतुदेवीपुराणे) घस्रद्व
येजन्मतिथिर्यदास्यात्पूज्यातदाजन्मभसंयुताच ॥ अ
संस्कृतेभेनदिनद्वयेपिपूज्यापरायाभवतीहतत्र ॥ उभ
यदिनेजन्मनक्षत्रलाभेतुपूर्वाह्णव्यापिनीग्राह्या ॥ त
स्यकर्मकालत्वात् (अथकेषुचित्पदार्थेषुवर्ज्ज्यतिथयः)
सिंहादित्येशुक्लपक्षेचतुर्थ्यांचंद्रदर्शनम् ॥ मिथ्याभि
दूषितंकुर्यात्तस्मात्पश्येन्नतंसदेति ॥ सप्तम्यांनस्पृशेत्तै
लंनीलवस्त्रंनधारयेत् ॥ नवाप्यामलकैःस्नायान्नकुर्या
त्कलहंरहः ॥ निंबस्यभक्षणंतैलंतिलैस्तर्पणमंजनम् ॥
सप्तम्यांनैवकुर्वीतताम्रपात्रेचभोजनम् (स्कांदे) शिरः
कपालमंत्राणिनखचर्मतिलास्तथा ॥ एतानिक्रमशो
नित्यमष्टम्यादिषुवर्ज्जयेदिति ॥ शिरोनालिकेरं ॥ क
पालमालवु ॥ नखंनिष्पावाः ॥ चर्ममसूरिकाः ॥ तिला
वृंताकमितिहेमाद्रौ ॥ चतुर्विंशतिमतेतु॥ यदीच्छेदूर्ध्वं
गमनमष्टम्यादिषुवर्ज्जयेदितिउत्तरार्द्धपठितं (व्यासः)
षष्ठयष्टमीअमावास्यापक्षद्वयचतुर्द्दशी ॥ अत्रसंनिहितं
पापंतैलेमांसेक्षुरेभगेइति (वामनपुराणे) नंदासुनाभ्यं
गमुपाचरेत्क्षौरंचरिक्तासुजयासुमांसम् ॥ पूर्णासुयो
षित्परिवर्ज्जनीयाभद्रासुसर्वाणिसमारभेतेति ॥ अत्र
नंदानिषेधादेवषष्ठीनिषेधेसिद्धे पुनस्तद्ग्रहणंदोषाधि
क्यार्थमितिद्वैतनिर्णयेतातचरणाः (व्यासः) संक्रांतौ
पंचदश्यांचद्वादश्यांश्राद्धवासरे ॥ वस्त्रंनिष्पीड्यतेनैव
क्षुरेणापिनहिंस्यते ॥ वस्त्रनिष्पीडंयत्तर्पणांतेतस्यानि
षेधः (सएव) तैलंनसंस्पृशेदामंनवृक्षान्छेदयेन्नच ॥

पश्चादौचरवौषष्ठ्यांरिक्तायांचहरेस्तिथौ ॥ आमंनील
तृणं (वामनपुराणे) नाभ्यंगमर्केनचभूमिपुत्रेक्षौरंचशु
क्रेचकुजेचमांसम् ॥ बुधेचयोषांनसमाचरेतशेषेषुस
र्वाणिसदैवकुर्यात् ॥ चित्रासुहस्तेश्रवणेचतैलंक्षौरंवि
शाखाप्रतिपत्सुवर्ज्यं ॥ मूलेमृगेभाद्रपदेषुमांसंयोषि
न्मघाकृत्तिकसोत्तरास्विति (वाराहे) चतुर्दश्यांतथाष्ट
म्यांपंचदश्यांचपर्वसु ॥ तैलाभ्यंगंतथाभोगंयोषितश्च
विवर्जयेत् ॥ नमृच्चगोमयंचापिननिशायान्तुगोमय
म् ॥ गोमूत्रञ्चप्रदोषेचगृह्णीयाद्बुद्धिमान्नरः (सन्ध्या
वर्ज्यानाहमनुः) चत्वारीमानिकर्माणिसन्ध्यायांपरि
वर्ज्जयेत् ॥ आहारंमैथुनंनिद्रांस्वाध्यायंचविशेषतः ॥
आहाराज्जायतेव्याधिर्गर्भंद्रावश्चमैथुनात् ॥ निद्रातो
जायतेऽलक्ष्मीःस्वाध्यायादायुषःक्षयः इति (इतिकाल
विशेषवर्ज्यानि ॥ अथक्षौरनिषिद्धकालः) पंचदश्यांच
तुर्दश्यामष्टम्यांचविशारद ॥ तैलंमांसंव्यवायंक्षुरं
चपरिवर्ज्जयेदिति (यमः) तथासितास्वष्टमीषुभूताहेदु
क्षयेतथा ॥ तैलाभ्यंगंक्षौरकर्मस्त्रीसंगंचविवर्ज्जयेत् ॥
(व्यासः) क्षौरेशनैश्चरादित्यभौमाहोरात्रमेवच ॥ त
थाप्रतिपदंरिक्तांतिथिंचपरिवर्ज्जयेत् ॥ अहोरात्रग्रह
णं ॥ नवारदोषाःप्रभवंतिरात्रावितिवचनाबाधनार्थं
(हेमाद्रौज्योतिश्शास्त्रे) नाभ्यक्तभुक्तरणकालनिरासना
नांनस्नातसुप्तगमनांशुकभूषितानाम् ॥ संध्यानिशार्क
कुजसौरिदिनेनराणां क्षौरंहितंभवतिचाह्निनचापिष
ष्ठ्याम् (अह्नीत्याहोरात्रोपलक्षणं ॥ मार्कण्डेयः) अष्ट

मीचतथाषष्ठीनवमीचचतुर्दशी ॥ क्षुरकर्माणिवर्ज्याच पर्वसंधिस्तथैवच (श्मश्रुकर्माणिमरीचिः) निरासनस्यसुप्तस्यातिष्ठतश्चतथैवच ॥ सायंभुक्तवतश्चैवस्नातस्यरुषितस्यच ॥ यात्रायुद्धोद्यतस्यापिश्मश्रुकर्मविवर्ज्जयेत् (वृद्धगार्ग्यः) मीनेधनुषिसिंहेचस्थितेसप्ततुरंगमे ॥ क्षौरमत्रनकर्त्तव्यंविहारंगृहकर्मच (अथमांसनिषिद्धकालः ॥ हेमाद्रौनंदिपुराणे) यदिनामचतुर्दश्यांसदामांसंविवर्ज्जयेत् ॥ वर्ज्जयेदयनेमुख्येक्तस्वर्गमतिर्नरः ॥ चतुर्थीचाष्टमीचैवद्वादशीचचतुर्दशी ॥ तथापंचदशीवर्ज्याषडशीतिमुखानिच ॥ संक्रमेचापिसूर्यस्यविषुवेचापिवार्षिके ॥ मांसान्नविरतोमर्त्योयातिस्वर्गदिनत्रयमिति ॥ संक्रमादयनविषुवतोर्ग्रहणंदोषातिशयार्थं ॥ वार्षिकेवर्षाकालसंबंधिमासचतुष्टये ॥ दिनत्रयमपिवार्षिकेविरतइतिसंबंधः ॥ अथवाश्वयुतंमांसंवर्ज्जयेन्मांसभक्षणे ॥ बहुमासकृतंपुण्यंलभेताश्वयुजान्नरः ॥ अन्यत्रमासत्रयपर्यंतं मांसत्यागेयत्फलंतत्प्राप्नोतीत्यर्थः ॥ योनरःकार्त्तिकेमासेमांसंतुपरिवर्ज्जयेत् ॥ संवत्सरस्यलभेतपुण्यंमांसविवर्ज्जनात् (अथकलिवर्ज्यानि ॥ आदित्यपुराणे) यस्तुकार्त्तयुगोधर्मोनकर्त्तव्यःकलौयुगे ॥ पापप्रयुक्ताश्चसदाकलौनार्योनरास्तथेति ॥ कार्त्तयुगःकृतयुगसंबंधी (हेमाद्रौमाधवीये) विधवायांप्रजोत्पत्तौदेवरस्यनियोजनम् ॥ बालिकाक्षतयोन्याश्चवरेणान्येनसंस्कृतिः ॥ विधवायांवाग्दानानंतरंदेवरस्यनियोजनम् ॥ यस्याम्रियेतकन्यायावाचासत्ये

कृतेपतिः ॥ तामनेनविधानेननिजोविंदेतदेवरः ॥ अपुत्रांगुर्वनुज्ञातोदेवरःपुत्रकाम्यया ॥ सपिण्डोवासगोत्रोवा घृताभ्यक्तऋतावियादिति मनुयाज्ञवल्क्याभ्यामुक्तंनिषिध्यते ॥ नतुविवाहानंतरंविधवायाम् ॥ नान्यस्मिन्विधवानारी नियोक्तव्याद्विजातिभिरितितन्निषेधात् ॥ वरेणान्येनसंस्कृतिरितिनदेवरनियोजनपरंपूर्वेणपौनरुक्त्यात् ॥ बालिकासङ्कल्प्यदत्तानवाग्दत्ता ॥ तदानींच्चतयोनित्वशंकायाअभावात् ॥ इदंविज्ञानेश्वरेणदत्तामपिहरेत्पूर्वाच्छ्रेयांश्चेद्वारआव्रजेदित्यनेन सप्तपद्युत्क्रमणात्प्राक्पूयदन्यस्मैदानमुक्तं तद्विषयमितिध्येयम् ॥ तथाकन्यानामसवर्णानांविवाहश्चद्विजातिष्विति॥ तिस्रोवर्णानुपूर्वेणद्वेतथैकायथाक्रमम् ॥ ब्राह्मणक्षत्रियविशांभार्य्याःस्वाशूद्रजन्मनइतिविहितः (तथा) आततायीद्विजाग्र्याणांधर्म्मयुद्धेनाहिंसनम् ॥ द्विजाग्र्याणां विप्राणाम् ॥ आततायिनमायातंहन्यादेवाविचारयन्नितिविहितम् ॥ सम्मुखमकूटशस्त्रेणमारणम् ॥ एतेननाततायिवधेदोषोन्यत्रगोब्राह्मणेभ्यइतिसुमन्तुवाक्यम्॥ (कलिविषयमेवेतिसिद्धम् ॥ तथा) द्विजस्याब्धौतुनौयातुःशोधितस्यापिसंग्रहः ॥ सत्रदीक्षाचसर्व्वेषांकमण्डलुविधारणमिति ॥ सत्रदीक्षानिषेधमुखेनसत्राधिकारएवविप्राणांपर्युदस्यते ॥ अथकमण्डलुचर्यामुपदिशंतीत्यादि ॥ विधारणमित्यनेनवानप्रस्थश्रमएवएतल्लक्ष्यतइत्याहुः ॥ तत्र (बृहन्नारदीये) उभयोरपिभिन्नत्वेनोपादानात् ॥ तथा ॥ महाप्रस्थानगमनंगोसंज्ञातिश्च

गोसवेइति ॥ महाप्रस्थानगमनंउत्तरादिगमनम् ॥ गोसवोयज्ञविशेषः ॥ तथा ॥ सौत्रामन्यामपिसुराग्रहणस्यचसंग्रहः ॥ अग्निहोत्रहवण्याश्चलेहोलीढापरिग्रहः ॥ लेहोजिह्वयास्वादनम् ॥ कथंचिल्लीढायाःपरिग्रहः पुनर्होमसाधनत्वम् ॥ तथा ॥ वानप्रस्थश्रमस्यापिप्रवेशोविधिबोधितः ॥ व्रतस्वाध्यायसापेक्षमघसंकोचनंतथेति ॥ व्रतमग्निहोत्रपरिचर्य्यादि ॥ वेदाग्निवियुक्तस्यत्र्यहमाशौचमिष्यतइतिदेवलवचनविहितम् ॥ तथा ॥ प्रायश्चित्तविधानंचविप्राणांमरणांतिकमितिस्थितिरितिमनुवाक्यमेतद्युगविषयमेव ॥ एकमूलकल्पनालाघवात् ॥ संसर्गदोषस्तेयान्यमहापातकिनिष्कृतिरिति ॥ त्यजेद्देशंकृतयुगेत्रेतायांग्राममुत्सृजेत् ॥ द्वापरेकुलमेकंतुकर्त्तारंतुकलौयुगेइतिपाराशरवचनेनसंलापादिनवविधिसंसर्गाभावेपिविहितदेशादित्यागस्यनिषेधः ॥ यद्वाकृतेसम्भाष्यपततित्रेतायांस्पर्शनेनतु ॥ द्वापरेत्वन्नमादायकलौकर्त्तैवलिप्यते ॥ इत्यनेनसम्भाषणस्पर्शनादिजन्यपातित्यैवनिषेधः ॥ नतुपतितेनसहसंवत्सरंनवविधसंसर्गप्राप्तस्यपातित्यस्य ॥ पूर्वोक्तवचनद्वयबाधमात्रेणचरितार्थस्यनवविधसंसर्गप्रतिपादकानेकवाक्याबाधस्यानाप्यत्वात् ॥ कलौपततिकर्मणेतिवाक्यस्वारस्येनपतितसंसर्गरूपकर्मजन्यस्यपातित्यस्य दुर्निवारत्वाच्च ॥ अतश्चेदानींतनानांसंसर्गप्रायश्चित्तानुष्ठानाचारः ॥ स्वाचारएवस्तेयान्यमहापातकेषुनिष्कृतिः रहस्यप्रायश्चित्तंनिषिध्यते ॥ अत्रकेचित् ॥ स्तेयान्यमहापातकेप्रा

यश्चित्तमेवकलौनभवतीत्याहुः ॥ तन्न(पराशरस्मृतौ) महापातकिनामपिप्रत्येकंप्रायश्चित्तविधानात् ॥ कृते तुमानवाधर्मास्त्रेतायांगौतमाःस्मृताः ॥ द्वापरेसाखलिखिताःकलौपाराशराःस्मृताइत्यनेनान्यस्मृतिविरोधेविकल्पप्रशक्तौस्मृत्यंतरीयविशेषशास्त्रेणच बाधप्रयोक्तौ पाराशरस्मृतेः ॥ कलौबलीयस्त्वनियमेनस्तेयान्येत्यस्याबाधात् ॥ नचबाधेविषयान्तरासम्भवादप्रामाण्यापत्तिः ॥ औदुम्बरींस्पृष्ट्वोद्गायेदितिश्रुत्याबाधितयाऔदुम्बरीसर्व्वावेष्टयितव्येतिस्मृतेः ॥ द्वित्राण्यंगुलानिमुक्त्वासर्व्वावेष्टयितव्येति ॥ नापसुधाकरोक्ततात्पर्य्यकल्पनवदिहापिस्तेयान्यमहापातकनिष्कृतिर्नोपदेश्याकृतायामपिनिष्कृतौ संसर्गोनकर्त्तव्यइतितात्पर्यकल्पनात् ( वस्तुतस्तु ) मनुवाक्येनोपदेशस्य निषेधस्यासिद्धत्वात् ॥ ब्राह्मणभोजनविधिविरोधाच्च ॥ रहस्यप्रायश्चित्तनिष्कृतिर्नभवतीतिकल्प्यम् ॥ अतएवतत्रतत्ररहस्यप्रायश्चित्तंनिषिद्धंनिन्दितम् ॥ तस्मात्प्रकाशयेत्पापमित्यादिनोक्तम् ॥ नचैवंस्तेयपर्य्युदासोऽसङ्गतः ॥ तस्यकलावनायासेनस्तेयनिष्पत्त्याप्रतिनिमित्तमुपदेशासंभवेनरहस्यप्रायश्चित्ताभ्यनुज्ञानार्थत्वात् (तथा) वरातिथिपितृभ्यश्चपशूपाकारणाक्रियेति ॥ वरस्यप्राजापत्योतिथेराग्नावैष्णवइतियागविधिः ॥ वाध्रीणशस्यमांसेनतृप्तिर्द्वादशवार्षिकीत्यादिवचन कदंबकेनत्रिष्वपिप्राप्तिः ॥ अत्रश्राद्धेपशुयागाभावेनतद्धर्मानतिदेशादुपाकरणाप्राप्तेः ॥ पशूपाकरणशब्दलक्षितं

तत्प्रकृतिपितृभ्योमांसदानान्निषिध्यते ( तथाच ) श्रा
द्धेमांसमित्यनेनैकमूलत्वान्नकल्पनागौरवम् (तथा) द
त्तौरसेतरेषान्तुपुत्रत्वेनपरिग्रहः ॥ सवर्णान्याङ्गनादुष्टैः
संसर्गःसाधितैरपि ॥ सवर्णान्याअसवर्णायाअङ्गनास्ता
भिर्दुष्टैःकृतप्रायश्चित्तैरपिसंसर्गः इदञ्चोत्तमवर्णविषयमे
वेतियुक्तमुत्पश्यामः (तथा) अयोनौसंग्रहेवृत्तेपरित्यागो
गुरुस्त्रियाइति ॥ चतस्त्रस्तुपरित्याज्याःशिष्यगागुरुणा
चया ॥ पतिघ्नीचविशेषेणजुङ्गितोपगताचयेत्यादिना
विहितः ॥ अनेनयुगान्तरेअयोनौसंसर्गेपरित्यागइति
गम्यते (तथा) परोद्देश्यात्मसन्त्यागउच्छिष्टस्यापिव
र्जनम् ॥ गवार्थेब्राह्मणार्थेवासत्यःप्राणान्परित्यजेदिति
विहितः ॥ स्वेमुच्छिष्टमुच्छिष्टोपहतञ्चेतिवशिष्ठाद्युक्तं
तन्निमित्तंप्रायश्चित्तञ्चेतिकेचित् ॥ विश्राणनंवितरणं
स्पर्शनंप्रतिपादनम् ॥ प्रादेशनंनिर्वपणमपवर्जनंमहाति
रिति ॥ काण्डीस्मरणात् ॥ अपवर्ज्जनंदानम् ॥ ब्राह्म
णायोदगुच्छिष्टंप्रयच्छेदित्यादिनामधुपर्कादिविहितमि
तिभ्रातृचरणाः ॥ प्रतिमाभ्यर्चनार्थायसकल्पश्चसध
र्मकः ॥ इयमेवप्रतिमायावज्जीवंमयापूजनीयेत्येवमा
दिः ॥ अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवच ॥ शा
मित्रञ्चैवविप्राणांसोमविक्रियणन्तथा ॥ शामित्रंयज्ञे
स्वयमेवपशुमारणम् ॥ षड्भक्तानशनेनान्नहरणंहीन
कर्मणः (षड्भक्तानशनसुपवासत्रयम् ) बुभुक्षितस्त्र्य
हंस्थित्वाधान्यमब्राह्मणाद्धरेदितिविहितम् ॥ शूद्रेषु
दासगोपालकुलमित्रार्द्धसीरिणाम् ॥ भोज्यानृताश्गृह

स्थस्यतीर्थयात्रातिदूरतः ॥ गृहस्थस्याहिताग्नेरितिके
चित् (तथा) शिष्यस्यगुरुदारेषुगुरुवद्वृत्तिरीरिता ॥ गु
रुवत्प्रतिपूज्यास्तुसवर्णागुरुयोषितइतिमनूक्ता ( तथा )
आपद्वृत्तिर्द्विजाग्र्याणामस्वस्तनिकतातथा ॥ क्षात्रेण
कर्मणाजीवेद्विशांवाप्यापदिद्विजइति ॥ त्र्याहिकोश्व
स्तनोपिवेत्युक्तातथा ॥ प्रजार्थंतुद्विजाग्र्याणांयजारणि
परिग्रहः ॥ ब्राह्मणानांप्रवासित्वंमुखाग्निधमनक्रिया ॥
प्रवासशीलत्वंवृथातुनचिरंवसेदिति स्मरणादितिकेचि
त् (तथा) बलात्कारादिदुष्टास्त्रीसंग्रहोविधिचोदितः ॥
यतेस्तुसर्ववर्णेषुभिक्षाचर्याविधानतः ॥ नवोदकेदशा
हश्चदक्षिणाविधिचोदितेति॥ दशरात्रेणशुद्ध्यन्तिभूमि
स्थश्चनवोदकमितिविहितम् ॥ गुरवेतुवरन्दत्त्वास्नायी
ततदनुज्ञयेतिविहितम् (दक्षिणादानम् ॥ तथा)ब्राह्मणा
दिषुशूद्रस्यपचनादिक्रियापिच ॥ आर्याधिष्ठितावाशूद्राः
संस्कर्त्तारःस्युरित्यापस्तंबविहिता(तथा) भृग्वग्निपतनै
श्चैववृद्धादिमरणन्तथा (अत्रमूलम्) वृद्धःशौचस्मृते
र्लुप्तः ॥ प्रत्याख्यातभिषक्क्रियाइत्यादिविज्ञानेश्वरग्रन्था
द्द्रष्टव्यम् ॥ गोतृप्तिशिष्टेपयसिशिष्टैरात्मनःक्रिया ॥ पिता
पुत्रविरोधेचसाक्षिणांदण्डकल्पनम् ॥ साक्षिणांसमा
धत्रीणांच ॥ पितापुत्रविरोधेतुसाक्षिणांत्रिगुणोदमः ॥
अन्तरेचतयोर्यःस्यात्तस्याप्यष्टगुणोदमइतिविहितम् ॥
यत्रसायंगृहत्वश्चमुनिभिस्तत्त्वदर्शिभिः ॥ यत्रसायंका
लोजातस्तत्रैवसंन्यासिनामवस्थानम् ॥ एतानिलोक
गुप्तार्थंकलेरादौमहात्माभिः ॥ निवर्त्तितानिकर्म्माणि

व्यवस्थापूर्वकम्बुधैः ॥ समयश्चापिसाधूनांप्रमाणंवेदव
द्भवेत् (ब्रह्मपुराणे) दीर्घकालंब्रह्मचर्य्यंधारणंचकमण्ड
लोः ॥ गोत्रान्मातृसपिण्डाच्चविवाहोगोवधस्तथा ॥
नराश्वमेधौमद्यंचकलौवर्ज्ज्यंद्विजातिभिः ॥ दीर्घकाल
मितिकालपदोपादानवलादष्टचत्वारिंशद्वर्षाणिवेदब्रह्म
चर्यमितिश्रुत्युक्तं ॥ अथादीर्घब्रह्मचर्यमित्येवाचक्षयत् ॥
एतेनब्रह्मव्रतनैष्ठिकमितिरामचंद्राचार्योक्तिःपरस्ता अ
तएवद्राविडानांनैष्ठिकब्रह्मचर्याचारःसंगच्छते ॥ कमण्ड
लुधारणंव्याख्यातंगोत्रात् इत्यनेनस्वगोत्रोत्पन्नायाः
पितृष्वसुःमातृसपिण्डादित्यनेन मातुलगोत्रसापिंडय
योःसामान्यनिषेधेनैव प्राप्त्यभावान्मातुलकन्यापरिण
यननिषेधकानिवाक्यानिकलिविषयाण्येव ॥ अतएवा
धुनिकानांतदाचारोनाचारएव ॥ कृष्णार्ज्जुनादीनां
तुयुगांतरीयत्वात् । सदाचारएव । अतएव ॥ व्यासे
नकलिनिंदाप्रक्रमे ॥ तृतीयांमातृतःकन्यांतृतीयांपितृ
तस्तथा ॥ शुक्लेनचोद्वहिष्यंतिविप्राःपापविमोहिता इ
त्युक्तं ॥ बौधायनेनचमातुलपितृष्वसृदुहितृगमनमिति
दाक्षिणात्याचारेषुगणितं ॥ गोवधोमधुपर्कादौ ॥ नर
मेधःब्राह्मणैर्ब्राह्मणमालभेतेति ॥ मद्यंगोमाध्वादिरूपं
क्षत्रियवैश्ययोर्निष्पद्यते ॥ तस्माद्ब्राह्मणराजन्यौवैश्य
श्चैवसुरानपि ॥ वेदीत्यनेनसुरायाद्विजात्यवच्छेदेनानि
षेधस्यसिद्धत्वात् (यद्वा) वामगमार्गादौत्रैवर्णिकादिपु
रस्कारेणविनायकशांत्यादौ क्षत्रियादिपुरस्कारेणोक्तंच
निषिध्यते (क्रतुः) देवराच्चसुतोत्पत्तिर्दत्ताकन्यानदीयते

नयज्ञोगोवधःकार्य्यःकलौनचकमण्डलुः ॥ विधवायां प्रजोत्पत्तौइत्यनेनसमानार्थकंपूर्वार्द्धम् (आदित्यपुराणे) ऊढायाःपुनरुद्वाहंज्येष्ठांसंगोवधंतथा ॥ कलौपञ्चनकुर्वीतभ्रातृजायांकमण्डलुम् ॥ ज्येष्ठांसंविषमंविभागम् ॥ भ्रातृजायांजायामितिशेषः (दानहेमाद्रौगरुडपुराणे) नकलौक्रियतेह्यश्वमेधोवाप्यथगोसवः ॥ नरमेधोच्चतानारीदेवरात्पुत्रसन्ततिः ॥ गर्हितंसप्तकंह्येतद्राजसूयकमण्डलू (श्राद्धदीपिकायाम् ) मदनपारिजातेचनिगमः ॥ अक्षतागोपशुश्चैवश्राद्धेमांसंतथा मधु ॥ देवराच्चसुतोत्पत्तिःकलौपञ्चविवर्ज्जयेत् ॥ यथावेदबहिर्धर्माणांप्रधानंसंबन्धिमात्रांशे विधिर्नतुतादर्थ्यांशेप्रमाणाभावात्तद्वत् ॥ श्राद्धेमांसमित्यत्रश्राद्धसंबंधिक्रत्वर्थपुरुषार्थंचनिषिध्यते ॥ आदिविशेषात् ॥ पंचेत्यत्रनपरिसंख्यादोषत्रयापत्तेः ॥ पूर्वोक्तानेकवाक्यानर्थक्यापत्तेश्च ॥ अतःप्रदर्शनार्थम् ॥ एतद्वचनोपातत्वोपाधिनाचपञ्चत्वोपपत्तिः(आदित्यपुराणे) शपथाःशकुनाःप्रश्नाःसामुद्रिकमुपश्रुति ॥ उपयाचितमेतानिसंभवंतिकलौक्वाचित् ॥ तस्मात्तन्मात्रलाभेनकलौकार्यंनकारयेत् ( विश्वेश्वरपद्धतौ॥व्यासः ) अत्रत्रेतापरिग्रहइतिवदतासर्वाधानमेवनिषिध्यते ॥ अतएवलौगाक्षिः ॥ अर्द्धाधानंस्मृतंश्रौतस्मार्त्ताग्न्योस्तुपृथक्कृतिः सर्वाधानंतयोरैक्यकृतिःपूर्वयुगाश्रितेति ॥ युगस्यपूर्वम् ॥ पूर्वयुगंकलेः ॥ पूर्वभागेइत्यर्थः अर्द्धाधानमपियावद्वर्णभेदविभागंकार्यम् (तदाहदेवलः) यावद्वर्णवि

भागोऽस्तियावद्वेदःप्रवर्त्तते ॥ संन्यासंचाग्निहोत्रंचतावत्कुर्य्यात्कलौयुगइति ॥ यद्यपिसंन्यासस्यचतुश्चत्वारिंशच्छताब्दावधिकत्वंव्यासेनोक्तंतथागौणकालोनेन समर्थितइतिकेचित् ॥ त्रिदण्डैकदण्डाभिप्रायेणव्यवस्थेत्यपरे ॥ सामान्यतोनिषिद्धस्यव्यासवाक्येनोपसंहारइत्यन्ये ( वस्तुतस्तु ) चत्वार्यपीत्यादीनिवचनानिमहानिबंधेषुदृश्यंतइतिकलिवर्ज्यानिर्णयाः ॥

इतिश्रीमीमांसकशंकरभट्टात्मजनीलकण्ठभट्टेनकृतेभास्कराख्ये निबंधेसमयमयूखःसमाप्तिमगमत् ॥

---

## जैमिनिसूत्र भाषाटीकासहित

जैमिनिजीके बनायेहुये सूत्रोंका पण्डित रामरत्न अवस्थीने प्रत्यक्षर का भाषामें अर्थ किया है-इसमें जन्मपत्रका संपूर्ण फल वर्णितहै ॥

## पत्रा संवत् १९५४ पं० सूर्यनारायणसिद्धांतीकृत तथा पं० रामप्रसादसिद्धांतीकृत

## बृहज्ज्योतिस्सार भाषाटीकासहित

पण्डित सूर्यनारायणकृतसंग्रह भाषाटीकासहितहै जिसमें संपूर्ण मुहूर्त और जन्मपत्रका फल और वर्ष बनाने की विधि इत्यादि अनेक विषय वर्णित हैं इसी एक पुस्तक से ज्योतिषी पंडित के प्रतिदिन का काम निकल सक्ताहै यह पुस्तक अत्युत्तम है ॥

## मुहूर्त्तचिन्तामणि भाषाटीकासहित

मूल राम ज्योतिषी और टीकाभाषा पण्डित रामरत्नअवस्थीकृत है जिसमें गर्भाधान, पुंसवन, सीमंत, जातकर्म, नामकरण, अन्नप्राशन, मुंडन, कर्णवेध, यज्ञोपवीत और विवाहादि के संपूर्ण मुहूर्त्त ललित श्लोकों में वर्णित हैं मुहूर्त्तों में यह सर्वोपरि ग्रंथ है इसका पंडित लोग बहुत प्रमाण मानते हैं यह पुस्तक अवश्य देखने के योग्य है ॥

## नीलकंठी भाषाटीकासहित

मूल नीलकंठजी कृत भाषाटीका पंडित शक्तिधरजी शास्त्रीकृत छापा टैप ॥

---

## शीघ्रबोध भाषाटीकासहित

मूल काशिनाथ भट्टाचार्य व टीका भाषा श्रीदाऊजीकृत-जिसमें बालकों के पढ़ने के लिये विवाह मुण्डनादि नाना प्रकार के संपूर्ण मुहूर्त्त और अन्य ज्योतिषकी बातें वर्णन की गई हैं ॥

## सामुद्रिकभाषाटीकासहित

उमामहेश्वरसंवाद—जिसमें प्रत्येक अक्षर का भाषा टीका हुआ है हस्तरेखा और सब शुभाशुभ लक्षण इसमें वर्णित हैं ॥

## बृहज्जातक भाषाटीकासहित

श्रीवराहमिहिराचार्य्यकृतमूल और जिला नव्वाबगंज बारहबंकी मौज़े कान्हीपुर पँचगवांनिवासी पण्डित रामरत्न अवस्थी कृत भाषा टीका है-जिसमें जन्मपत्र के संपूर्ण फल, राजयोग, नष्ट जन्मपत्र के बनाने की रीति, चंद्रनिर्याण, मास, ऋतु और तिथिफल इत्यादि वर्णित हैं ॥

## मुहूर्त्तगणपति भाषाटीकासहित

गणपतिरचित मूल श्लोक और टीका भाषा सूर्यनारायण सिद्धांतीकृत जिसमें विवाहादि के संपूर्ण मुहूर्त्त सुगमता से वर्णित हैं मुहूर्त्तोंमें इतनाभारी कोई ग्रंथ नहींहै यह मुहूर्त्तों में शिरोमणि पुस्तकहै ॥

## षट्पंचाशिकासटीक

पण्डित पृथुयशकृत मूल और पण्डित बदरीनाथ कृत भाषाटीकाहै जिसमें ५६ श्लोकों में नाना प्रकार के प्रश्न वर्णितहैं जिनके द्वारा समीप और दूरका संपूर्ण वृत्तान्त सुगमता से मालूम होता है ॥